# हरिप्रभा

**PEER REVIEWED, REFEREED, OPEN ACCESS, INDEXED INTERNATIONAL QUARTERLY RESEARCH JOURNAL**
**(UGC CARE Listed)**

अङ्कः-१०-१२ (अक्टूबर-दिसम्बर, २०२३) वर्षम्-२०






***हरियाणा साहित्य-संस्कृति-अकादमी***
अकादमीभवनम्, आई.पी-१६, सैक्टर- १४, पञ्चकूला (हरियाणा)

प्रकाशक:
संस्कृत-प्रकोष्ठ:
आई.पी.-16, सैक्टर-14, पञ्चकूला
हरियाणा-134113

सम्पादक:
**डॉ. प्रतिभा वर्मा**
संस्कृत-प्रकोष्ठ:

टंकणकर्त्री
**श्रीमती मनीषा**

*website : www.haryanaakademi.ac.in*
*e-mail : hariprabhaskt@gmail.com*

ISSN : 2278-0416



संस्करणम् : 2023

प्रत्यङ्कं मूल्यम् : 75.00

**मुद्रक:**
**एसोसिएट प्रिंटर्स**
226 इंडस्ट्रियल एरिया, फेज़-1, चण्डीगढ़

मो.: 9814125627

## संरक्षणम्

१. ***प्रो. अभिराजराजेन्द्रमिश्रः***
कुलपतिचरः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी।

## परामर्शदातृ-समितिः

१. ***प्रो. वेदप्रकाश-उपाध्यायः***
आचार्यचरः, पञ्जाबविश्वविद्यालयः, चण्डीगढम्।

२. ***प्रो. जगदीशप्रसाद-सेमवालः***
आचार्यचरः, विश्वेश्वरानन्द-वैदिक-शोध-अनुसंधान-केन्द्रम्, होशियारपुरम्।

३. ***प्रो. रमाकान्त आंगिरस***
आचार्यचरः, पञ्जाबविश्वविद्यालयः, चण्डीगढम्।

४. ***प्रो. राधेश्यामशर्मा***
कुलपतिचरः, चौ.देवीलालविश्वविद्यालयः सिरसा एवं
गुरुजम्भेश्वरः विज्ञान-प्रौद्योगिकी-विश्वविद्यालयः हिसारः।

५. ***प्रो. विक्रमकुमारविवेकी***
आचार्यचरः, पञ्जाबविश्वविद्यालयः, चण्डीगढम्।

६. ***प्रो. राजेश्वरप्रसादमिश्रः***
आचार्यचरः, कुरुक्षेत्रविश्वविद्यालयः, कुरुक्षेत्रम्।

*****

***निर्णायकसमितिः***

१. डॉ. ***हरिसिंह-शास्त्री***
   आचार्यचरः, एम.एल.एन. महाविद्यालयः, यमुनानगरम्।

२. ***प्रो. ललितकुमार-गौडः***
   आचार्यचरः, कुरुक्षेत्रविश्वविद्यालयः।

३. ***प्रो. सुरेन्द्रकुमारः***
   आचार्यः, महर्षिदयानन्दविश्वविद्यालयः, रोहतकः।

४. डॉ. ***कामदेव झा***
   प्राचार्यः डी.ए.वी. कॉलेज, पेहोवा, कुरुक्षेत्रम्।

५. डॉ. ***राजकुमारमिश्रः***
   *सहायकाचार्यः*, केन्द्रीयसंस्कृतविश्वविद्यालयः, जम्मूपरिसरः।

६. डॉ. ***बृहस्पतिमिश्रः***
   *सहायकाचार्यः*, केन्द्रीयसंस्कृतविश्वविद्यालयः, धर्मशाला।

७. डॉ. ***पुष्पेन्द्र जोशी***
   *सहायकाचार्यः*, पंजाबीविश्वविद्यालयः, पटियाला।

*****

## अनुक्रमणिका

पृष्ठसंख्या

*****

# सम्पादकीयम् ......



हरियाणा-साहित्य-संस्कृति-अकादमी संस्कृत-प्रकोष्ठमाध्यमेन सम्प्रसारितया हरिप्रभेत्याख्यया विद्वद्वृन्दसुसेवितया शोधपत्रिकया अहर्निशं संस्कृतमातरमासेवमाना आस्ते। भारतवर्षस्य प्रतिष्ठात्वेन विश्वस्मिन् जगति प्रथितेयं दैवी वाक् साम्प्रतं सर्वत्र समादृता वरीवर्ति। भारतसर्वकारद्वारा सद्य एव महता साफल्येन पूर्णतां प्रापिते जी-२० महासम्मेलनेऽपि ''वसुधैव कुटुम्बकम्'' इति संस्कृतपरम्परासेवितं महावाक्यमेव ध्येयत्वेनाङ्गीकृतमासीदिति समेषां मनस्तोषाय कल्पते। संस्कृत भारतम्समर्थभारतम् इति केवलं वचोविन्यासमात्रं नैव वर्ततेऽपितु तथ्यमेतत्। वेदशास्त्र-उपनिषद्-रामायणादिषु समुपदिष्टंज्ञानमादाय एव वयं साम्प्रतिके युगे विश्वगुरुरूपेण प्रतिष्ठिताः स्मः। संस्कृतेन एव भारतं भारतमिति सुवचः।

प्रकृतेऽस्मिन्नङ्के समाहृत्य चतुर्दश शोधालेखाः संकलिताः सन्ति। एतांश्च दर्शन-उपनिषद्-व्याकरण-गीता-महाभारतादिसम्बद्धान् विविधविद्यावितानसुयुतानालेखान् प्रस्तुवतां नश्चेतसि अस्ति सुमहान् परितोषः। दत्तावधानेऽपि यदि केचन दोषा अवशिष्यन्ते चेत् क्षाम्यन्तु गुणैकग्राहिणो विद्वद्धौरेया इत्यलं पल्लवितेन।

*विद्वच्चरणचञ्चरीकः*

***डॉ. चित्तरञ्जनदयाल सिंह कौशल***

*****

 ISSN 2278-0416

# महाभारते नैतिकमूल्यानि : साम्प्रतिको विमर्शः

*डॉ. मौमिता भट्टाचार्यः
**डॉ. मोहितः कुमारः

**कुंजीशब्दाः – महाभारतम्, नैतिकमूल्यम्, सत्यम्, अहिंसा, गुरुभक्तिः, दानम्, विनयः, कामः, क्रोधः, कृतज्ञः।**

भारते वैदिकसाहित्यादनन्तरमवाप्तेषु साहित्येषु अतिशयेन महत्त्वपूर्णमस्ति 'महाभारतम्'। अत्र भारतीयमनीषायाः चरमं दृग्गोचरीभवति। न केवलं प्राच्या अपितु अर्वाच्या अपि विद्वान्सः इमं ग्रन्थं भारतीयसंस्कृतेः आकरग्रन्थः मन्यन्ते। अत्र नास्ति संशीतिः यत् भारतीयजनजीवने अस्य ग्रन्थस्य प्रभावः नितरां परिलक्ष्यते। नैतिकता समाजेन समं सुतरां सम्बद्धतां धारयति, अतः जनानां देशकालपरिस्थित्यनुगुणं नैतिकतायाः स्वरूपमपि परिवरीवर्ति, तथापि नैतिकतायाः केचन बिन्दवः सार्वभौमिकतामपि भजन्ते। अतः महाभारते प्रत्यक्षतया परोक्षतया चोक्तानि नैतिकतत्त्वानि शोधपथमानेतुं सुमहानय-मवसरः।

अस्मिन् शोधपत्रे आर्षकाव्यभूते महाभारतग्रन्थे प्रतिबिम्बितानां नैतिकतत्त्वानां विशदो विमर्शो विधास्यते।

वैदिकादेव कालाद् भारतीयमनीषा नैतिकमूल्यानामाधारत्वेन सत्यनिष्ठाम् अङ्गीकरोति। **सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितम्**,[1] **यो वै स धर्मः सत्यं वै तत्**[2], **सत्यमेव जयति नानृतम्**[3] इत्यादीनि दृष्टान्तत्वेन शक्यन्ते उपस्थातुम्। इमे भावाः महाभारते अपि अनूदिताः वर्तन्ते तद्यथा- **सत्यस्य वचनं श्रेयः**[4] अर्थात् सत्यभाषणं श्रेयस्करं वर्तते। अथ च **यद्‌भूतहितमत्यन्तम् एतत्सत्यं मतं मम**[5]

* सहायक-अध्यापकः, विद्यापुरः उच्चतरमाध्यमिकः विद्यालयः, आसामः
** सहायकः आचार्यः एवं प्रभारी, संस्कृत-विभागः, श्री चित्रगुप्त पी.जी. कालेज, मैनपुरी-९१३६४३४३५५

१. तैत्तिरीयारण्यकम्, १०.६३
२. बृहदारण्यकोपनिषद्, १.४.१४
३. मुण्डकोपनिषद्, ३.१.६
४. महाभारतम्, १२.३२९.१३
५. तदेव

अस्मिन् पद्यांशे नारदो ब्रूते यत् येन प्राणिनामधिकाधिको लाभो जायते, मन्मतेन तदेव सत्यमिति। इतोऽपि **अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते**[१] अर्थात् सहस्रेभ्यः अश्वमेधेभ्यः सत्यमेव श्रेयः। एवं विविधग्रन्थेषु नानाविधैः वचोभिः सत्यस्य सुमहिमा वर्णितः अस्ति। इतरे काव्यग्रन्था अपि अस्मान् बहुधा प्रेरयन्ति यत् वयम् सत्यवादिनास्याम सत्यस्य च रक्षायै बद्धकटयः भवाम। महाभारतकारः सङ्केतयति यत् सत्यस्य मुखं कदाचिच्छलेनावृतं न भवेत् तद्यथा- **न तत् सत्यं यच्छलेनानुविद्धम्।**[२]

ऋषिभिस्साकं प्राक्तनैराचार्यैरपि नैतिकमूल्यानां सूच्यामितोपि एकं पदम् महत्त्वपूर्णमुक्तम्, तन्नाम 'अहिंसा'। अत्र प्रतिपादितैर्विविधैरुद्धरणैः ज्ञायते यत् महाभारतम् अस्मिन् विषये बहुधा मुखरीभवति। तदेवम् - **अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः।**[३] अर्थात् यत्र अहिंसा निहिता अस्ति तत्र वैरो न तिष्ठति। **अहिंसाया दीर्घायुरिति प्राहुर्मनीषिणः**[४] अर्थात् विद्वांसः प्रोचुर्यत् अहिंसकाः दीर्घायुष्मन्तः भवन्ति। **यदहिंस्रं भवेत् कर्म तत्कार्यमिति विद्महे**[५] अर्थात् अस्माकं कर्माणि हिंसारहितानि स्युः। **अहिंसा सर्वभूतानामेतत् कृत्यतमं मतम्**[६] अर्थात् समग्रैरपि प्राणिभिस्सह अहिंसया व्यवहर्त्तव्यमिति अस्माकं परमं कर्त्तव्यम्। महाभारते एवंविधाः नैके अंशाः अहिंसां ख्यापयन्तः सन्ति, ते समेऽपि अहिंसानिवृत्तिं बोधयन्ति। वर्तमानसमये, विशेषेण अद्यत्वे परितः हिंसाया यत् भयङ्करं ताण्डवं विलोक्यते तेन वयमाहताः निराशान्विताश्च स्मः, अनेन मानवतायाः अपूरणीया क्षति बोभवीति। इदानीं समयस्य आवश्यकतास्ति यत् वयं स्वर्णमयाय भविष्यते संसाराय हिंसाविरहितं वातावरणं दद्याम, अहिंसाया स्थापनायै महाभारतवचनानि अक्षरशः पालयाम।

**गुरुभक्तिः** अर्थात् गुरूणामादरः, गुरुसेवा अर्थात् समादरेण क्रियमाणा गुरूणाम् सेवा इत्येतत् द्वयं अस्माकं भारतस्य प्राचीना परम्परास्ति। अस्मिन् प्रसङ्गे महाभारतस्य महद्योगदानमस्ति। अस्मिन् विषये महाभारते एकः सम्पूर्णः अध्यायः वर्तते, तद्यथा महाभारतस्य शान्तिपर्वणि १०८ तमे अध्याये मातृपितृगुरुसेवा वर्णिता अस्ति। तत्र युधिष्ठिरः जिज्ञासति यत् धार्मिकेषु कार्येषु किं कार्यं सर्वप्रमुखमिति? (**किं कार्यं सर्व**

१. तत्रैव, १२.१६२.२६
२. तत्रैव, ५.३५.१७
३. योगदर्शनम्, २.३५
४. महाभारतम्, १.१६३.१२
५. तत्रैव १४.२८.१६
६. तत्रैव १४.५०.२

**धर्माणां गरीयो भवतो मतम्)**[1] अस्मिन्नध्याये पितामहः भीष्मः ३१ श्लोकैः उत्तरं प्रदाय युधिष्ठिरस्य जिज्ञासां शमयति। स्थालीपुलाकन्यायेन वयं कतिपयान् श्लोकानुपस्थापयामः। भीष्म एवमारभते-

**मातापित्रोर्गुरूणाञ्च पूजा बहुमता मम।**
**इह युक्तो नरो लोकान् यशश्च महदश्नुते॥**[2]

अर्थात् मातुः पितुः गुरूणाञ्च सेवामहम् सर्वोत्कृष्टं कर्म मन्ये। यः एतत्कर्म कुरुते सः संसारे महतीं कीर्तिमवाप्नोति इति निश्चप्रचम्। तत्पश्चात् भीष्मः मातृपितृगुरूणाम् सर्वोच्चतां प्रतिपादयतः विचारानुपस्थापयति।

साम्प्रतमाधुनिके समाजे पित्रोः सम्मानं सेवा च शनैः-शनैः क्षीणतामितः। येन पित्रोः विशेषेण वृद्धयोः पुरतः महती विडम्बना विद्यते। अस्माकं देशस्य युवभिः सुसमृद्धाय राष्ट्राय इयं शिक्षा महाभारताद् ग्रहीतव्या। अस्माकं समयेऽपि शिक्षकाणामियं भावनात्मिकावश्यकतासीत् यत् विद्यार्थिनः तान् दत्तचित्तेन शृणुयुः सम्मानयेयुः च। गीतायाः महान् सन्देशः **"श्रद्धावान् लभते ज्ञानम्"**[3] इति छात्राणां हितमेव सङ्केतयति। यत्र शिष्याः स्वशिक्षकं प्रति नैतिकरूपेण कृतज्ञाः भवन्ति तत्र शोभनतरं शैक्षिकं वातावरणमुपजायते। शिष्यस्य सन्ततेर्वा कर्तव्यच्युतेः परिणामान् प्रतिपादयति महाभारतप्रणेता। तद्यथा -

**उपाध्यायं पितरं मातरञ्च, येऽभिद्रुह्यन्ते मनसा कर्मणा वा।**
**तेषां पापं भ्रूणहत्याविशिष्टं तस्मान्नान्यः पापकृदस्ति लोके॥**[4]

अत्र भीष्मः तेषां निन्दां महापापिरूपेण करोति ये निजं मातरं, पितरं शिक्षकं वा प्रति असाधु व्यवहरन्ति।

महाभारतकारः न्यायस्य समर्थने अन्यायस्य च विरोधे मुखरितो सन् अस्मान् बोधयति यत् केनापि समं अन्यायेन न व्यवहर्तव्यम्।

**तदेवमाह -**

**अन्यायवृत्तो पुरुषो न परस्य न चात्मनः।**[5]

अन्यायस्य पथि गच्छन्नरः कस्यापि कृते शोभनो न भवति, न स्वस्मै न च

१. तत्रैव, १२.१०८.३-३३
२. तदेव
३. तत्रैव, ६.२८.३९
४. तत्रैव, १२.१०८.३०
५. तत्रैव, १२.७९.१५

परस्मै। ईशोपनिषदि सुप्रथितः **"तेन त्यक्तेन भुञ्जीथाः"**[१] इति घोषः महाभारतेऽपि पदान्तरैः प्रतिबिम्बितो भवति। तद्यथा- **"नास्ति त्यागसमं सुखम्"**[२] अर्थात् त्यागसदृशं सुखं नास्ति संसारे इति। विविधरूपेण क्रियमाणः त्यागः समाजे महद् नैतिकं मूल्यं धारयति। बहुभिः प्रथितैः दृष्टान्तै इदं सुविदितं यत् अनन्तकालात् त्यागस्य विविध-रूपाणि समाजे आचर्यन्ते। यथा- 'दानम्' इत्यनेन अर्थिभ्यः अभीष्टानि दीयन्ते। दानम् नाम स नैतिकगुणः यस्य समर्थनं साम्प्रतिकेऽपि समाजे जनाः नैतिकमूल्यरूपेण कुर्वन्ति।

यथा महाभारतमपि स्पष्टं निर्दिशति-

**दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।**
**देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्॥**[३]

अर्थात् दानं तस्मै एव प्रदातव्यं यः उपकारी भवेत् अथ च दानं यथोचिते देशे, काले पात्रे च प्रदातव्यं तदेव दानं शोभनमिति उच्यते।

अस्मिन् सन्दर्भे कानिचन अन्यानि अपि उद्धरणानि सन्ति। तद्यथा- **'दानं हि महती क्रिया'**[४] **'दानेन भोगी भवति'**[५] **'दानान्न दुष्करतरं पृथिव्यामस्ति किञ्चन'**।[६] दानम् अत्यन्तं सरलं न विद्यते यतोहि तस्य पूर्वं सुयोग्यं पात्रम् अन्वेष्टव्यम्, तदेव क्लेशाय। महाभारते इदमपि आहितम्- **'अर्हानर्हपरिज्ञानात् दानधर्मोऽपि दुष्करः'**[७]

मनुना अन्यैः च धर्मशास्त्रकारैः धर्मस्य अभिन्नाङ्गतया वर्णितं **'अस्तेयम्'** नैतिकमूल्यत्वेन स्वीक्रियते। महाभारतम् अस्मान् सचेतयति यदस्माभिः चौर्यं प्रति सावधानेन भाव्यम्। तद्यथा - **'धर्मं संहरते तस्य धनं हरति यस्य यः'**।[८] समाजे सुसभ्यं भवितुं एकः नैतिकगुणः परमावश्यकः तस्य नाम **'विनयः'**। महाभारतकारः विषयेऽस्मिन् आह - **'श्रियं ह्यविनयो हन्ति'**[९] अर्थात् मनुष्यस्य अविनम्रता तस्य

१. ईशावास्योपनिषद्, १
२. महाभारतम्, १२.२८३.३७
३. तत्रैव, ६.४१.२०
४. तत्रैव, १३.३०.२६
५. तत्रैव, १३.२६९.१३
६. तत्रैव, ३.२६०.२८
७. तत्रैव, १२.२७.३०
८. तत्रैव, १२.८.१३
९. तत्रैव, ५.३४.१२

श्रियं लक्ष्मीं सौभाग्यं वा नाशयति।

कामस्य, क्रोधस्य लोभस्य वा अनियन्त्रितं विवेकरहितं च प्रदर्शनं मनुष्यस्य अनैतिकं व्यवहारं द्योतयति। अथ च महाभारते नैकानि उद्धरणानि सन्ति येषु प्रत्यक्षं परोक्षं वा अनियन्त्रिताः कामक्रोधादयः गर्हितास्सन्ति। तद्यथा- **कामग्राहगृहीतस्य ज्ञानमप्यस्य न प्लवः।**[1] अर्थात् कामरूपेण नक्रेण गृहीतस्य जनस्य ज्ञानमपि भवसागरपाराय समर्थं न भवति। **कामानुसारी पुरुषः, कामाननु विनश्यतीति**[2] अर्थात् यः पुरुषः काममनुसरतितमां सः स्वविनाशमेव अनुसरति। **कामो बन्धन-मेवैकम्, नान्यदस्तीह बन्धनम्।**[3] अर्थात् काम एव इह जगति वास्तविकं बन्धनं बन्धनकरमिति भावः, न किमपि अन्यद् बन्धनमस्ति लोके। वस्तुतः महाभारते कामशब्देन सामान्याः इच्छाः कामनाः अपि अभिप्रेताः सन्ति किन्तु मुख्यः अर्थः तु शारीरिकसङ्गमः एव काम इति। अत्र इदमवधेयं यत् महाभारते यस्य कामस्य निन्दा कृता सः कामः धर्मविरहितः एव। श्रीमद्भगवद्गीतायां भगवता कृष्णेन उक्तम्- **धर्माविरूद्धो भूतेषु कामोऽस्मि भरतर्षभ।**[4] महाभारते इदमपि आहितम्- **कामश्च राजन् क्रोधश्च तौ प्रज्ञानं विलुम्पतः।**[5] अर्थात् हे राजन्, कामः क्रोधश्च मनुष्यस्य बुद्धिं पूर्णतया लोपयतः। अत्र इदमुच्यते यत् अनियन्त्रितः कामः क्रोधश्च मनुष्यस्य जीवनं नाशयति। अतः अयं विषयः आधुनिके अपि समाजे महत्त्वं धारयति।

यत्र कृतघ्नता नैतिकपतनमुच्यते तत्र कृतज्ञता नैतिकमूल्यभिधीयते। महाभारतकारो विषयेऽस्मिन् आह- **कृतज्ञेन सदा भाव्यं धर्मकामार्थसिद्धये।**[6] अत्र भगवान्व्यासो ब्रूते- मनुष्यस्य जीवने त्रयाणां पुरुषार्थानां प्राप्तये सः सर्वदा कृतज्ञः भवेत्। पुरुषार्थ-सुधानिधिनामके ग्रन्थे उदीरितम्- **कृतज्ञः सर्वलोकेषु पूज्यो भवति सर्वदा।**[7] अर्थात् यः जनः अन्येषां उपकारान् मनसि धारयति कृतज्ञो भवति सः सर्वत्र सम्मानम् अर्जयति। महाभारते कृतघ्नता अतिनिन्दिता वर्तते। तद्यथा- **तान् मृतानपि क्रव्यादः कृतघ्नान्नोपभुञ्जते।**[8] अर्थात् राक्षसोऽपि कृतघ्नानां जीवानां मृतशरीरं न खादति।

---

१. तत्रैव, १२.२४१.२१
२. तत्रैव, ५.४२.१३
३. तत्रैव, १२.२५७.७
४. तत्रैव,६.३१.११
५. तत्रैव, ५.३४.६७
६. तत्रैव, १२.१७३.२०
७. पुरुषार्थसुधानिधिः, २.२१.७४
८. महाभारतम्, १२.१७१.२५

**ब्रह्महत्याफलं तस्य यः कृतं नावबुध्यते।**[1] अर्थात् यः अन्यैः कृतान् उपकारान् न स्मरति सः ब्रह्महत्यासदृशं फलं लभते महापातकी भवति। अथ च **'कृतघ्ने नास्ति निष्कृतिः'** अर्थात् कृतघ्नस्य जनस्य कथमपि निवृत्तिः क्षमा वा न वर्तते। अनेन इदं ज्ञायते यत् कृतज्ञता नैतिकमूल्यम् अस्ति, कृतघ्नता च नैतिकं पतनम्।

महाभारते नैतिकमूल्याकरे वयं इतोपि नैकानि नैतिकमूल्यानि अन्वेष्टुं पारयामः, यानि अस्माकं समये समाजे च महत्प्रासङ्गिकानि सन्ति।

अत्र एकः प्रश्नः समुदेति, आधुनिकः जागरूकः पाठकः प्रष्टुमर्हति यत् मानवमूल्यानाम् आदर्शभूते महाभारते कथं नैकपात्रेषु नैतिकमूल्याणां पतनं दृश्यते। सन्ति तादृशाः नैके प्रसङ्गाः, तेषु एक उपस्थाप्यते अत्र- महाभारतस्य महत्त्वपूर्णं पात्रं, द्रोणाचार्यस्य वीरपुत्रः अश्वत्थामा निजमातुलं कृपाचार्यं ब्रूते-

**प्रत्यक्षं भूमिपालानां भवतां चापि सन्निधौ।**
**न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः॥**
**कर्णश्च पतिते चक्रे रथस्य रथिनां वरः।**
**उत्तमे व्यसने मग्नो हतो गाण्डीवधन्वना॥**
**तथा शान्तनवो भीष्मो न्यस्तशस्त्रो निरायुधः।**
**शिखण्डिनं पुरस्कृत्य हतो गाण्डीवधन्वना॥**
**दुर्योधनश्च भीमेन समेत्य गदया रणे।**
**पश्यतां भूमिपालानामधर्मेण निपातितः॥**
**एकाकी बहुभिस्तत्र परिवार्य महारथैः।**
**अधर्मेण नरव्याघ्रो भीमसेनेन पातितः॥**[2]

अत्र अश्वत्थामा ताः दुःखदाः परिस्थितीः संकेतयति, यत्र पाण्डवैः द्रोणाचार्यः, कर्णः, पितामहः भीष्मः, दुर्योधनः इत्यादयः पराजिताः। एतस्मिन् घटनाक्रमे आधुनिकः आलोचकः मानवमूल्यानाम् अधिकाराणां च भृशं अवमूल्यनं पश्यति। एतद् पतनं अवमूल्यनं तावद् गभीरमस्ति यदि तस्मिन् समये मानव-अधिकार-आयोगः अथवा तत्सदृशाः अन्तरराष्ट्रीय-संस्थाः अभविष्यन् चेत् ते अपि एतद्विरुध्य अभियोगं अकरिष्यन्। यदि अश्वत्थामाद्वारा कृतः आरोपः दुर्योधनपक्षीयाणां कौरवाणां आरोपः मन्यते चेत् किं वयं विस्मृतवन्तो वा कियत् क्रूरतया पाण्डवपक्षीयो अभिमन्युः कौरवपक्षिभिः

१. तत्रैव, ७.१८४.२८
२. तत्रैव, १०.५.१९-२४

सप्तभिः महारथिभिः सम्मिल्य हतः। अश्वत्थाम्ना स्वयं यत्कृतं तत् विस्मारयितुं शक्यते वा? सः अपि पूर्वोक्तरीत्या मध्येरात्रं धृष्टद्युम्नेन सहितं पञ्चानां पाञ्चालानां प्राणान् अपहृतवान्। अस्माभिः नितरां गर्हणीयाः इमे जघन्याः अपराधाः। किन्तु वयं महाभारते एव तात्कालिक-युद्धनियमान् तत्समयस्य च आवश्यकताः समालोक्य एतासां सैन्यघटनानाम् औचित्यं ज्ञातुं शक्नुमः। पाण्डवानां शिविरे मध्येरात्रं स्वकुकृत्यानां प्रदर्शनाद् पूर्वं स्वसङ्कल्पान् मनसि निधाय अश्वत्थामा सार्वजनिकरूपेण एतादृशान् कृत्यान् समर्थयति।

एतत् सुस्पष्टयितुं महाभारतस्य सौप्तिकपर्वणः प्रथमाध्यायस्य अध्ययनं परममावश्यकम्।

तद्यथा-

**यच्चाप्यत्र भवेत्कार्यं गर्हितं लोकनिन्दितम्।**
**कर्तव्यं तन्मनुष्येण क्षत्रधर्मेण वर्तता॥**
**निन्दितानि च कर्माणि कुत्सितानि पदे पदे।**
**सोपधानि कृतान्येव पाण्डवैरकृतात्मभिः॥**
**अस्मिन्नर्थे पुरा गीताः श्रूयन्ते धर्मवित्तमैः।**
**श्लोका न्यायमवेक्षद्भिस्तत्त्वार्थास्तत्त्वदर्शिभिः॥**
**परिश्रान्ते विदीर्णे वा भुञ्जाने वाऽपि शत्रुभिः।**
**प्रस्थाने वा प्रवेशे वा प्रहर्तव्यं रिपोर्बलम्॥**
**निद्रार्तमर्धरात्रे च तथा नष्टप्रणायकम्।**
**भिन्नयोधं बलं यच्च द्विधा युक्तं च यद्भवेत्**
**इत्येवं निश्चयं चक्रे सुप्तानां निशि मारणे।**
**पाण्डूनां सह पाञ्चालैर्द्रोणपुत्रः प्रतापवान्॥**[1]

अत्र अश्वत्थामा अनीतिपूर्वकम् महायोधैः शत्रूणां शक्तिविनाशं समर्थयति। अथ च मध्येरात्रं निःशस्त्राणां सुप्तानां पाण्डवानां पाञ्चालां च वधस्य आत्मीयां योजनां दोषरहितां पश्यति। सम्भाव्यते यदिदं सर्वं महाभारतीय-समाजे स्वीकार्यं स्यात्। किन्तु वयं साम्प्रतिके समाजे एतत्स्वीकर्तुं न शक्नुमः।

तथापि इदं सप्रमाणं शक्यते वक्तुं यत् महाभारतकारेण महर्षिणा वेदव्यासेन तात्कालिकस्य समाजस्य समयस्य च यथार्थं चित्रणं विहितम्। अथ च महाभारते बहुषु

१. तत्रैव, १०.१.५१-५६

सामाजिकेषु वैयक्तिकेषु च विषयेषु मार्गदर्शनम् अपि प्रदत्तम् ऋषिणा। येन समाजस्य उन्नतिरपि सुनिश्चिता स्यात्। महाभारते अनेकत्र प्रत्यक्षं परोक्षं वा तात्कालिकानाम् अनियमितताना‍ं प्रतिषेधोऽपि विलोक्यते।

**सन्दर्भग्रन्थाः**

१. ईशोपनिषद्, शांकरभाष्यसहितम्, मोती लाल बनारसी दास, नवदेहली, १९८८
२. तैत्तिरीयारण्यकम्, आनन्दाश्रमसंस्कृतग्रन्थावलिः (३६), पुणे, १९६९
३. पातञ्जलयोगदर्शनम्, सुरेशचन्द्र श्रीवास्तव, चौखम्बा सुरभारती प्रकाशन, १९८८
४. पुरुषार्थसुधानिधिः, शङ्कराचार्यः, गवर्नमेंट ओरियंटल मैन्युस्क्रिप्ट लाइब्रेरी, मद्रास, १९५५
५. बृहदारण्यकोपनिषद्, आनन्दाश्रमसंस्कृतग्रन्थावलिः (१५), पुणे, १९५३
६. महाभारतम्, वेदव्यासः, भण्डारकर ओरियंटल रिसर्च इंस्टीट्युट, पुणे, १९४०
७. मुण्डकोपनिषद्, गीताप्रेस, गोरखपुर, १७ तमं संस्करणम्, २०५६ वि.सं.
८. श्रीमद्भगवद्गीता, सम्पादक महामहोपाध्याय प्रमथनाथ तर्कभूषण, देव साहित्य कुटीर प्रा. लि., कोलकाता, २००१

*****

'हरिप्रभा' वर्षम्-२०, अङ्कः-१०-१२ ( २०२३ ) ISSN 2278-0416

# श्रीमद्भगवद्गीतायां प्रबन्धकस्य युक्तयः

***डॉ.नरेन्द्रकुमारपाण्डेयः**

गीता साक्षात् परमात्मनः हृदयमस्ति। यथोक्तं श्रीकृष्णेन अर्जुनं प्रति **'गीता मे हृदयं पार्थ'**। अयं ग्रन्थः सार्वभौमधर्मग्रन्थः अस्ति। यतोहि अस्मिन् ग्रन्थे कस्यापि मतस्य धर्मस्य च खण्डनं नैव वर्तते। गीतायां संक्षेपतः विस्तरेण च धर्म-कर्म-भक्ति-ज्ञान-वैराग्य-विज्ञानस्य च तत्त्वसारः संनिहितं विद्यते।

यदि वयमस्मिन् सन्दर्भे आधुनिकप्रबन्धनशास्त्रस्य प्रमुखान् सम्प्रत्ययान् पश्यामः यथा -नेतृत्वक्षमता, दृष्टिकोणम्, अभिप्रेरणम्, कार्येषु श्रेष्ठता, क्रियाविधिज्ञता, वेदज्ञानत्वं, कार्ये समर्पणत्वं, निर्णयस्वीकरणं, योजनादयः तदा गीताग्रन्थे एतानि सर्वाणि प्रबन्धनतत्त्वानि पश्यामः। वस्तुतः एतानि प्रबन्धनतत्त्वानि गीतायां सूक्ष्मदृष्ट्या वर्णितानि विश्लेषितानि च सन्ति। परं भारतीयानां दुर्भाग्यवशात् आधुनिकप्रबन्धनक्षेत्रे अमेरिकादेशस्य सिद्धान्ताः पाठ्यन्ते। एते सिद्धान्ताः केवलं भौतिकवादं तथा येन केन प्रकारेणापि अधिकाधिकं वित्तप्राप्तिविषये चिन्तयन्ति। परं गीता धर्मयुक्तं धनप्राप्त्यर्थं जनान् प्रबोधयति। यतोहि - अधर्मेण प्राप्तं धनमपि परिणामे महत् दुःखदायि भविष्यति। वयं परिणामविषये चिन्तनम् अकृत्वा यूरोपदेशैः यत् लब्धं तत् सर्वं मङ्गलकारकं तथा अस्माकं स्वकीयं शास्त्रनिहितं तत् सर्वम् अमङ्गलकारकम् इति। अद्यतनप्रबन्धनक्षेत्रस्य चिन्तनम्। अतः एव अर्बुदपर्यन्तविशालधनराशिः ज्वलत्प्रवाहेण निर्मितानि प्रबन्धनसंस्थानानि हिंसा-भ्रष्टाचारः देशद्रोहादिभिःदोषैः आवृत्ताः। एतेषां प्रत्यक्षरूपेण समाजे कोऽपि प्रभावो न दृश्यते। अस्य प्रमुखं कारणं भारतीयप्रबन्धनक्षेत्रे पाश्चात्य- प्रबन्धनसिद्धान्तानां पूर्णरूपेण अनुपालनमेव।

भारतीयप्रबन्धनक्षेत्रे प्रथमः नियमो भवति बुद्धियुतं चयनं, तथा प्राप्तस्य सावधानेन उपयोगः। महाभारतस्य संग्रामस्य आरम्भे दृश्यते यत् राजा दुर्योधनः बृहद्चमूचयनं करोति, अपरपक्ष अर्जुनः श्रीकृष्णस्य (अर्थात् कृष्णस्य बुद्धिमत्तायाः)

---

* **सहायकाचार्यः, संस्कृतविभागः, हिमाचलप्रदेशकेन्द्रीयविश्वविद्यालयः, धर्मशाला**
Email- narendraskt102@hpcu.ac.in

चयनं करोति। अंशोऽयं एकं सूत्रं प्रस्तौति यत् प्रभावी प्रबन्धकः कः भवति?

भगवद्गीता अस्मान् बोधयति यत्- कर्मसंग्रहः आत्मनः कृते न अपितु परमात्मनः (परमात्मरूपिणः संसारस्य) कृते भवेत् चेत् कर्मणा संसिद्धिः प्राप्यते। यथा गीतायां स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः[1], अपि च क्रियमाणकर्माणि कर्तव्यबुद्ध्या सम्पादयेत् न तु फलबुद्ध्या तेन आत्मशान्तिरपि प्राप्यते। तथा च परिणामः सुखदो भवति। यथा- द्वितीयाध्याये अर्जुनं प्रबोधयति श्रीकृष्णः -

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।**
**मा कर्मफलहेतुर्भूर्मास्ते संगोऽस्त्वकर्मणि॥**[2]

यतोहि- फलप्राप्तौ समदृष्टिः भवति चेत् शुभाशुभकर्मद्वारा पापपुण्यप्राप्तिः नैव जायते, तदा अस्माकं कर्माणि कर्मयोगरूपेण परिणमन्ते। यथोक्तम् -

**योगस्थः कुरु कर्माणि संङ्ग त्यक्त्वा धनञ्ज्य।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥**[3]

अत्र गीता अस्मान् शिक्षयति यत् कर्म कर्मरक्षायै करणीयम् अर्थात् (Work For The Sake Of Work) परं प्रायशः अस्माकम् आचरणम् एवं भवति यत् पूर्वं फलं किम् अनन्तरं कर्मारम्भः जायते, अनेन कर्मणि प्रबन्धनं नैव सिद्ध्यति। यदि कोऽपि प्रबन्धकः एवं चिन्तयिष्यति यत् अनेन कर्मणा मम पदोन्नतिः भविष्यति अतः करोमि, तर्हि एतत् मात्रकर्म एव न तु कर्मयोगः, अपितु स्वार्थबुद्ध्या कृतं कर्म एव। यदि वयं फलविषयकीम् आसक्तिं विहाय कर्मणि प्रवृत्ताः भवामः तदा कदापि जीवने चिन्ता-अवसाद-द्वन्द्व-मानसिकग्लानि-भयादिदुर्गुणाः आत्मनि न आगमिष्यन्ति। भगवद्गीता स्वकर्तव्यस्य पालनविषये सम्बोधयति न तु अन्यजनानां कर्मणां चिन्ताविषये। जनाः प्रायशः स्वकर्म अकृत्वा अपरजनकर्तव्यविषये चर्चारताः भवन्ति। तेन अस्माकं प्रबन्धनं सफलतां न एति। गीता मानवं वदति यत् सुखदुःखयोः, लाभालाभयोः जयाजययोः समानं भूत्वा प्राप्तकर्मणः आचरणं कुर्यात्। तेन प्रबन्धने निश्चितसिद्धिरपि प्राप्यते। यथोक्तं भगवता श्रीकृष्णेन-

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥**[4]

१. श्रीमद्भगवद्गीता - १८/४६
२. श्रीमद्भगवद्गीता - २/४७
३. श्रीमद्भगवद्गीता - ४/४८
४. श्रीमद्भगवद्गीता - ४/४८

एवं रीत्या गीतायाः अनुसरणेन कर्मकरणेन प्रबन्धनक्षेत्रे मानवाः सफलाः भविष्यन्ति। ते दुराशा-विषाद-चिन्तादिभिः मुक्तो भूत्वा आत्मकल्याणाय प्रवर्तन्ते। तेन वैयक्तिकसामाजिक-आध्यात्मिकक्षेत्रेषु महती उन्नतिः भवितुं शक्यते। अत एवं गीताग्रन्थमुद्दिश्योक्तमिदं साधुतां भजते-

**गीताकल्पतरोश्छाया, शीतला शुभदा सुखा।**
**आश्रित्य तां जनाः सर्वे, भूयासुः फलोद्यमाः**

मानवेषु प्रथमधर्मः स्वकर्तव्यानां पालनं भवति इति वेदाः शास्त्राण्यपि अवोचन्, अस्मिन् जगति चत्वारः वर्णाः वर्तन्ते-ब्राह्मणक्षत्रियवैश्यशूद्राश्च। भिन्न-भिन्नवर्णानां भिन्न-भिन्नकर्तव्यमपि वर्तते, यथा- ब्राह्मणस्य कर्तव्यम् अध्ययनाध्यापनमिति, क्षत्रियस्य कर्तव्यं भवति देशस्य राष्ट्रस्य वा रक्षणमिति, अस्मिन्नेव क्रमे वैश्यस्यापि कर्तव्यमस्ति, यथा गीतायामपि सप्तदशाध्याये चतुश्चत्वारिंशत्तमे श्लोके वर्णितमस्ति यत् ''कृषिगौरक्ष्य-वाणिज्यं वैश्यकर्म स्वभावजम्'' इति, अतः परं शूद्रस्यापि कर्तव्यं वर्तते सेवा इति, अतः शिक्षायामपि अर्थात् शिक्षाक्षेत्रे छात्रस्य कर्तव्यं भवति विषयाणामध्ययनमिति। अतः श्रीमद्भगवद्गीतायां विभिन्नश्लोकमाध्यमेन कर्तव्यनिष्ठाविधेःश्लोकं पश्यामः।

अर्थात् नित्ये नैमित्तिके काम्ये च केनचित् फलविशेषेण सम्बन्धितया श्रूयमाणे कर्मणि नित्यसत्त्वस्थस्य मुमुक्षोः ते कर्मपात्रे अधिकारः तत्सम्बन्धितया अवगतेषु फलेषु न कदाचिदपि अधिकारः। सफलस्य बन्धरूपत्वात् फलरहितस्य केवलस्य मदाराधनरूपस्य मोक्षहेतुत्वाच्च। मा च कर्मफलयोः हेतुर्भूः, त्वया अनुष्ठीयमानेऽपि कर्मणि नित्यसत्त्वस्थस्य मुमुक्षोः तव अकर्तृत्वमपि अनुसन्धेयम्। फलस्यापि क्षुन्निवृत्त्यादेः न त्वं हेतुः इत्यनुसन्धेयम्। अकर्मणि, अननुष्ठाने न योत्स्यामि, इति यत् त्वया अभिहितं न तत्र ते सङ्गोऽस्तु, उक्तेन प्रकारेण युद्धादिकर्मण्येव सङ्गोऽस्तु इति।

प्रबन्धनपरिदृश्ये विचारयामश्चेत् तर्हि अर्जुनं प्रति कृष्णः वदति अशुद्धचित्तस्य तव कर्मण्येवाधिकारः, न तु ज्ञाननिष्ठायाम्। कर्म कुर्वतस्तव फलेषु तृष्णा कस्याञ्चिद-प्यवस्थायां मा भूत्। पुरुषः फलकामनया कर्मणि प्रवृत्तः कर्मफलस्य जन्मनः हेतुर्भवति,

१. श्रीमद्भगवद्गीता - २/४७

त्वं तु निष्कामः कर्मफलहेतुः मा भूः। दुःखरूपं कर्मेति धिया कर्मणोऽकरणे प्रीतिः तव मा भूत्। अनेने श्लोकमाध्यमेन छात्रेभ्यः कर्म प्रति अभिप्रेरणाप्रदानमिति, येन स्वकर्तव्यं प्रति निष्ठया सम्बद्धः स्यात्।

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः॥**[१]

अर्थात् भगवान् श्रीकृष्णः अर्जुनं प्रति वदति- हे धनञ्जय! भक्तिद्वारा समस्तगर्हितकर्मभ्यः दूरं भवतु, अनेन भावेन भगवतः शरणं गृह्णातु, ये मानवाः स्वकर्मफलानि भोक्तुं वाञ्छन्ति, ते कृपणाः भवन्ति इति।

श्लोकस्याशयः वर्तते यत् योऽयं प्रधानफलत्यागविषयः अवान्तरफलसिद्ध्यसिद्ध्योः समत्वविषयश्च बुद्धियोगः तद्युक्तात् कर्मण इतरत् कर्म दूरेण अवरम्। महदिदं द्वयोः उत्कर्षापकर्षरूपं वैरूप्यम्। अनेन श्लोकमाध्यमेन सन्मानवस्य कर्म भवति, ईश्वरस्य प्राप्तिः यथा जगति विभिन्नस्थानं भवति अतः स्थानानुगुणं मानवाः कार्यं कुर्वन्ति, तदेव संसारेऽपि कर्तव्यं भवति भगवद्प्राप्तिरिति। कर्तव्यपरायणतायाः सम्बन्धः अग्रिमे श्लोकेऽपि दृश्यते। यथा -

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम्॥**[२]

अर्थात् बुद्धियोगयुक्तस्तु कर्म कुर्वाणः उभे सुकृतदुष्कृते अनादिकालसञ्चिते अनन्ते बन्धहेतुभूते जहाति। तस्मात् उक्ताय बुद्धियोगाय युज्यस्व। योगः कर्मसु कौशलम्- कर्मसु क्रियमाणेषु अयं बुद्धियोगः, कौशलम्- अतिसामर्थ्यम्। अतिसामर्थ्यसाध्यः इति।

प्रबन्धनदृष्ट्या अस्यार्थः वर्तते यत् समत्वबुद्धियुक्तः पुरुषः अस्मिन् लोके पुण्यपापे उभे अपि चित्तशुद्धिज्ञानप्राप्तिद्वारा परित्यजति। तस्मात् त्वं समत्वबुद्धियोगाय उद्युक्तो भव। समत्वबुद्धिरूपो योगो हि कर्मकरणकौशलमेव। यतः बन्धनस्वभावान्यपि कर्माणि समत्वबुद्ध्या क्रियमाणानि स्वभावान्निवर्तन्ते, अनेन श्लोकमाध्यमेन श्रीकृष्णः अर्जुनम् उपदिशति यत् हे अर्जुन! समत्वयोगस्य पालनं करोतु। यथा शास्त्रे उक्तमस्ति - ''सुखे सति पुण्यं क्षीयते, दुःखे सति पापं क्षीयते, अतः अनयोः स्थित्योः समत्वं भवतु इति।

---

१. श्रीमद्भगवद्गीता - २/४९
२. श्रीमद्भगवद्गीता - २/५०

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥**[1]

अर्थात् भगवान् श्रीकृष्णः कथयति हे अर्जुन ! राज्यबन्धुप्रभृतिषु सङ्गं त्यक्त्वा युद्धादीनि कर्माणि योगस्थः कुरु, तदन्तर्भूतविजयादिसिद्ध्यसिद्ध्योः समो भूत्वा कुरु। तदिदं सिद्ध्यसिद्ध्योः समत्वं योगस्थ इत्यत्र योगशब्देनोच्यते। योगः - सिद्ध्यसिद्ध्योः समत्वरूपं चित्तसमाधानम्। जयः - पराजयो वा अनयोः अवस्थायां समस्तासक्तीनां त्यागं कृत्वा समभावात् स्वकर्तव्यस्य पालनं कुरु, स एव योग इत्युच्यते।

प्रबन्धकपरिदृश्ये अनेन श्लोकमाध्यमेन भगवान् श्रीकृष्णः वदति यत् बुद्धेः अनुगुणं कर्माकर्म विचारं कृत्वा कार्यं करणीयमिति।

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥**[2]

अर्थात् भगवान् श्रीकृष्णः अर्जुनं प्रति वदति हे कुन्तीपुत्र! यदि तव रणक्षेत्रे मरणं भविष्यति, तर्हि त्वं स्वर्गं प्राप्स्यसि, तथा यदि रणक्षेत्रे विजयो भविष्यति तर्हि वसुन्धरायाः एकच्छत्रराज्यस्य उपभोगं करिष्यसि, अतः दृढसङ्कल्पं कृत्वा युद्धाय उत्तिष्ठ इति।

प्रबन्धकयोग्यतां निहितार्थरूपेण पश्यामश्चेत् तर्हि प्राप्स्यामः यत् कस्मिन्नापि कार्ये सफलतां प्राप्तुं दृढसङ्कल्पः स्यात्, कारणं दृढसंकल्पं विना कस्यापि कार्यस्य सिद्धिः न भवति, दृढसङ्कल्पना कस्यापि क्षेत्रे भवितुं शक्यते, यथा संसारे प्रौद्योगिकक्षेत्रं भवतु, समाजे सामाजिककार्यं भवतु, सांस्कृतिकक्षेत्रे भवतु, संस्कारक्षेत्रे वा भवतु, दृढसङ्कल्पनायाः आवश्यकता सर्वत्र भवति तथैव शिक्षाक्षेत्रेऽपि दृढसङ्कल्पनायाः अत्यधिकमावश्यकता भवति। परं तत्रापि ज्येष्ठस्य, गुरोश्च अथवा आत्मदृढताया आवश्यकता भवति, अतः अनेन श्लोकमाध्यमेन भगवतः श्रीकृष्णस्य अभिप्रेरणायाः प्रभावात् अर्जुनः रणक्षेत्रे दृढसङ्कल्पो जातः।

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि॥**[3]

१. श्रीमद्भगवद्गीता - २/४८
२. श्रीमद्भगवद्गीता- २/३७
३. श्रीमद्भगवद्गीता - २/२७

अर्थात् भगवतः श्रीकृष्णः भवति अर्जुनं वदति हे पार्थ! येषां जन्म भवति, तेषां मृत्युः अपि निश्चितं भवति, तथा च मृत्योः अनन्तरं पुनर्जन्म अपि भवति, अतः स्वकर्तव्यपालने शोकं (दुःखं) न करणीयम्।

विचारयामश्चेत तर्हि प्राप्स्यामः यत् अर्जुनस्य चिन्ता दूरीकरणाय भगवानश्रीकृष्णः अर्जुनस्य सर्वेषां प्रश्नानां-शङ्कानां-जिज्ञासानाञ्च उत्तरं दत्तवान् तथा मनसि आगतानां समस्यानां दूरीकरणाय उपदेशं दत्तवान्, भगवान्श्रीकृष्णः गीतायां क्रिया, कार्यशीलता व्यवहारादि आध्यात्मिकसम्प्रत्ययानां विषये ज्ञानं प्रदत्तवान्, निष्काम कर्म अर्थात् फलस्येच्छां विना कर्मश्रेष्ठं भवति। मानवशरीरे सत्त्वतमोरजरूपा गुणाः भवन्ति। तथा च यस्याः व्यक्तेः मनसि कामना न भवति, तं व्यक्तौ नैराश्यभावः न आगच्छति अनेन श्लोकमाध्यमेन भगवान् श्रीकृष्णः अर्जुनं वदति यत् मानवस्य कृते कार्ये सफलतां प्राप्त्यर्थं धुवस्यापेक्षा भवति अनेन विना कार्यस्य सिद्धिः न भवितुं शक्यते इति।

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥**[1]

अर्थात् भगवान् श्रीकृष्णः अर्जुनं वदति हे पार्थ! देहातिरिक्तं अस्पृष्टसमस्त-देहस्वभावं नित्यम् आत्मानं ज्ञात्वा, युद्धे च अवर्जनीयशस्त्रपातादिनिमित्त-सुखदुःखार्थ-लाभालाभजयपराजयेषु अविकृतबुद्धिः स्वर्गादिफलाभिसन्धिरहितं केवलकार्यबुद्ध्या युद्धम् आरभस्व। एवं कुर्वाणो न पापमवाप्स्यसि पापं दुःखरूपं संसारं न अवाप्स्यसि, संसारबन्धात् मोक्ष्यसे इति।

प्रबन्धकदृष्ट्या विचारयामश्चेत् तर्हि प्राप्स्यामः यत् स्वकर्तव्यानां कृते किं करणीयम्? कि न करणीयम् इति मन्थनं कर्तव्यम्, कारणं विचारकरणे सति तत्र संशयः भवति, यथा जनानां कर्तव्यं भवति केवलसमाजचिन्तनम्, अतः भगवान् श्रीकृष्णः अर्जुनं सम्बोधयति यत् क्षत्रियाणां कर्तव्यं भवति युद्धक्षेत्रे युद्धम्, अतः त्वं युद्धं कुरु इति।

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्॥**[2]

अर्थात् इह कर्मयोगो न अभिक्रमनाशोऽस्ति, अभिक्रमः-आरम्भः, नाशः-फलसाधनभावनाशः, आरब्धस्य असमाप्तस्य विच्छिन्नस्यापि न निष्फलत्वम्, आरब्धस्य

---

१. श्रीमद्भगवद्गीता - २/३८
२. श्रीमद्भगवद्गीता - २/४०

विच्छेदे प्रत्यवायोऽपि न विद्यते। अस्य कर्मयोगाख्यस्य धर्मस्य स्वल्पांशोऽपि महतो भयात्- संसारभयात् त्रायते। अयमर्थः - 'पार्थ नैवेह नामुत्र विनाशस्तस्य न विद्यते' इति, अन्यानि हि लौकिकवैदिकानि च साधनानि विच्छिन्नानि न फलाय भवन्ति, प्रत्यवायाय च भवन्ति।

अस्य श्लोकस्याशयः वर्तते यत् भगवान् श्रीकृष्णः कथयति हे अर्जुन! मोक्षमार्गेऽस्मिन् कर्मयोगे अभिक्रमस्य कर्मणां प्रारम्भस्य कृष्यादिवत् कदाचित् फलमदत्त्वा विनाशो नास्ति किञ्च अङ्गवैगुण्येऽपि प्रत्यवायो न भवति, चित्तशुद्ध्यर्थस्य अस्य नित्यकर्मात्मकस्य धर्मस्य स्वल्पानुष्ठानमपि महतः जन्मजरामरणलक्षणसंसारभयाद् रक्षति अनुष्ठातारम् इति अनेन माध्यमेन कृष्णः अर्जुनाय कर्तव्यं प्रति अभिप्रेरणां ददाति इति।

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्॥**[1]

अर्थात् मयि सन्न्यस्तमनोरहितस्य स्वयत्नेन इन्द्रियनियमने प्रवृत्तस्य कदाचिदपि विविक्तात्मविषया बुद्धिः न सेत्स्यति। अत एव तस्य तदभावना च न संभवति। विविक्तात्मानम् अभावयतो विषयस्पृहाशान्तिः न भवति। अशान्तस्य विषयस्पृहायुक्तस्य कुतः सुखं वर्तते इति।

योग्यतापरिदृश्ये पश्यामश्चेत् तर्हि भगवान् श्रीकृष्णः अर्जुनं प्रति कथयति हे पार्थ! असमाहितमनसः पुरुषस्य आत्मस्वरूपविषयकबुद्धिः न भवति, नापि आत्मज्ञानाभिनिवेशः आत्माज्ञानाभिनिवेशरहितस्य शान्तिः नास्ति। अशान्तस्य सुखं कस्मात् आगच्छति, अनेन श्लोकमाध्यमेन श्रीकृष्णः अर्जुनं वदति यत् यावत्पर्यन्तं मानवानां हृदये आध्यात्मिकोन्नतिः न भवति। तावत् पर्यन्तं शान्तिः न भवति। अतः आन्तरिकसुखप्राप्त्यर्थम् आध्यात्मिकशान्तिः आवश्यकी वर्तते, अतः आनन्दस्वरूप-भगवतः ध्यानं करणीयमिति।

*****

---

१. श्रीमद्भगवद्गीता - २/६६

# मुग्धबोधस्य तथा पाणिनीयाष्टाध्यायां कृत्प्रत्ययेषु अनुबन्धविमर्शः

*जयपालः शास्त्री

**प्रस्तावना**- सम्पूर्णे संसारे मानवस्य समस्ताः कार्यकलापाः भाषायां व्याप्ताः परिचालिताः च सन्ति। भाषां परिमार्जितां संशोधितां च करणस्य सर्वोत्तमं सर्वमान्यं साधनं चास्ति- व्याकरणम्। संस्कृतभाषायाः साधुत्वम् असाधुत्वं च प्रतिपादने पाणिनेः विरचितायाः अष्टाध्यायाः महती भूमिका विद्यते। पाणिनिः अष्टाध्यायां भाषायाः लघोः इकाईवर्णात् प्रारम्भं कुर्वन् वर्णसंयोजनस्य पदविधानस्य शब्दसंरचनायाः वाक्यसंरचनायाः अर्थविश्लेषणस्य च अत्यन्तवैज्ञानिकतया समाहारम् अकरोत्। पाणिनेः अनुबन्धस्य योजना, तस्य सूक्ष्मवैज्ञानिकदृष्टेः सर्वोत्कृष्टम् उदाहरणम् अस्ति। पाणिनीयव्याकरणशास्त्रे अनुबन्धानाम् अत्यन्तं महत्त्वपूर्णं स्थानं विद्यते। अनुबन्धाः ते वर्णाः सन्ति, ये प्रकृत्या प्रत्ययेन आगमेन आदेशेन च सार्धं युक्ताः भवन्ति तथा व्याकरणे गुणवृद्धिविधानस्य गुणनिषेधस्य सम्प्रसारणस्य अनुनासिकस्य लोपस्य आदेशस्य आगमस्य विकरणस्य स्वरादिविधानस्य चेत्यादीनाम् अनेकानां कार्याणां विधानं करणाय प्रयुक्ताः भवन्ति।

पाणिनेः अष्टाध्यायाः लाघवतायाः एकं महत्त्वपूर्णं तत्त्वम् अनुबन्धानां योजना वर्तते। पाणिनिः अनुबन्धानां कामपि परिभाषां तु न अददात् किन्तु यत्र-तत्र वर्णानाम् इत्संज्ञायाः विधानम् अकरोत्,[१] तथा तेषां सर्वेषाम् इत्संज्ञकानां वर्णानां च लोपं कृतवान्।[२] येन स्पष्टम् अस्ति यद् अनुबन्धं योजयित्वा तेषां लोपं च विधाय पाणिनिना भाषायाः नियमाः अत्यन्तवैज्ञानिकरीत्या समायोजिताः कृताः।

पाणिनिना अच् एवं हल् उभयोः रूपे अनुबन्धानां प्रयोगः कृतः। पाणिनिः अष्टाध्यायाः प्रायशः सर्वेषु प्रकरणेषु अनुबन्धानां व्यवस्थाम् अकरोत्। यथा- प्रत्ययेषु, सुप्, तिङ्, धात्वंशः, कृत्, तद्धित, स्त्रीप्रत्ययानाम्, आदेशानाम्, आगमानां, धातूनां,

---

* सहायकाचार्यः संस्कृतविभागाध्यक्षः, चौ. बंसीलालः राजकीयः महिलामहाविद्यालयः, तोशामः, भिवानी। १२७०२१, दूरभाष- ९४६६०८६७८८ jaipalshastri20@gmail.com

१. पा.अ.-१/३/२ से १/३/८

२. पा.अ.-१/३/९

विकरणानां च एतेषां सर्वेषां व्यवस्थां कुर्वन् अनुबन्धानां प्रयोगम् अत्यन्तवैज्ञानिकरीत्या कृतवान्। वास्तविकरूपेण अनुबन्धानां प्रयोगं विना व्याकरणस्य प्रक्रिया सम्भवैव न भवितुं शक्नोति स्म। एतेषाम् अनुबन्धानां माध्यमेन व्याकरणशास्त्रे अनेकानि प्रयोजनानि सिद्धानि अभवन्। यतो हि अनुबन्धानां माध्यमेनैव प्रकृतौ प्रत्यये च पृथक्-पृथक् अभिज्ञानकरणं सरलमभवत्। अर्थवैषम्यस्य रचनावैषम्यस्य च प्रक्रिया सम्भवा शक्तवती। समानस्वरूपकाः प्रत्ययाः अपि अनुबन्धयोजनायाः कारणेनैव पदनिर्माणस्य दृष्ट्या भिन्नानां-भिन्नानाम् अर्थानाम् चोपस्थितिं कारयन्ति। यथा कृत्प्रत्ययानाम् अन्तर्गते आगतवन्तौ यत् एवं ण्यत् इमौ द्वौ प्रत्ययौ अनुबन्धलोपानन्तरं स्वरूपस्य दृष्ट्या समानौ स्तः, परन्तु अनुबन्धस्य प्रयोजनैः विभिन्नानां रूपाणां सिद्धिं च कारयन्ति। पाणिनिः अन्ये वैयाकरणाः च लाघवहेतवे एव न अपितु भाषायाः कृते वैज्ञानिकीं व्यवस्थां प्रदातुमपि अनुबन्धम् अत्यधिकम् उपयोगिनं स्वीकुर्वन्तः अस्य प्रयोगं निजव्याकरणग्रन्थेषु अकुर्वन्। परवर्तिनि काले संस्कृतभाषाम् आधारीकृत्य अन्येषां व्याकरणानां सम्प्रदायानां च रचना कृता। एतेषां व्याकरणानां मुख्यम् उद्देश्यं सरलतायाः प्रतिपादनकरणं तु आसीदेव परन्तु सार्धं-सार्धं युगानुकूलं भाषायाम् आगतानां परिवर्तनानां परिवर्धमानानाम् उपरि दृष्टिपातकरणमपि आसीत्। यतो हि भाषा एका सतत् परिवर्तनशीला इकाई वर्तते। तेन परिवर्ततेन सार्धं सामंजस्यं स्थापनाय तस्मिन् समये रचिताः अन्ये व्याकरणानां ग्रन्थाः अपि विशेषमहत्त्वस्य प्रतिपादनं कुर्वन्ति। पाणिनेः परवर्तिनि काले रचितानां अनेकेषां व्याकरणानां सम्प्रदायेषु (१३ शताब्द्याः उत्तरार्धे) बोपदेवेन विरचितस्य मुग्ध -बोधव्याकरणस्य विशेषं महत्त्वं वर्तते यतो हि पूर्ववर्तिभ्यः सर्वेषां व्याकरणानाम् अपेक्षया बोपदेवः मुग्धबोधव्याकरणाय संक्षिप्ततमं रूपम् अददात्। यस्मिन् सूत्राणाम् आहत्य संख्या ११८४ अस्ति। मुग्धबोधो बोपदेवः सूत्रसंख्या ९६५तः११८४पर्यन्तं केवलं लौकिकभाषापरकाणि १०३ कृत् प्रत्ययानां समावेशम् चाकरोत्। परम् आचार्यः पाणिनिः अष्टाध्यायां तृतीयाध्यायस्य प्रथमपादतः तृतीयपादपर्यन्तं (०३.०१.९१ तः ०३. ०३.७५ पर्यन्तम्) कृत्प्रत्ययानां विधानमकरोत्। येषु २३ वैदिकाः प्रत्ययाः सन्ति। उभौ वैयाकरणौ अनुबन्धस्य अस्याः वैज्ञानिकपद्धत्याः आलम्बनं स्वीकुर्वन्तौ प्रत्ययानां स्वरूपे तुल्यं भूतेष्वपि कथम् अनेकेषाम् अर्थानां प्रतिपादनं कृतवन्तौ। एतद् वैशिष्ट्यमेव दर्शयितुं मया अष्टाध्यायाः तथा मुग्धबोधव्याकरणस्य कृत्प्रत्ययेषु प्रयुक्तानाम् अनुबन्धानां वर्णनम् अस्मिन् प्रस्तुते शोधपत्रे कृतम्।

**अनुबन्धवैशिष्ट्यम्-** आचार्यः पाणिनिः कार्यविशेषस्य उद्देश्येन निज

व्याकरणशास्त्रे अनुबन्धानां व्यवस्थाम् अकरोत्। धातुषु प्रत्ययेषु चैते अनुबन्धाः योजिताः। योजयित्वा तेन एतेषां लोपोऽपि कृतः। लोपकरणस्य प्रयोजनमिदमस्ति यदेते निमित्तस्य (हेतोः) कार्यं कुर्युः। अर्थाद् अनुबन्धाः एव शब्दानां निमार्णकरणसमये अस्माकं कृते निर्देशकाः भवन्ति। एते एव बोधयन्ति यत् कस्य प्रत्ययस्य योजनेन अस्माभिः किं कार्यं करणीयम्। अनुबन्धस्य सन्दर्भे महाभाष्यकारस्य पतंजलेः कथनमस्ति- "**अनुबन्ध - करणार्थं च वर्णानामुपदेशः, अनुबन्धानां संख्यामिति। न ह्यनुपदिश्य वर्णाननु-बन्धाः शक्या आसङ्क्तुम्।**" (म.भा.पस्पशा. १.१) येन पाणिनिः अनुबन्धानाम् इत्संज्ञां लोपं च केनचित् विशेषप्रयोजनेनैव अकरोत्। तथैव आचार्यः बोपदेवोऽपि कार्यार्थेनैव प्रयुक्तवर्णस्य इत्संज्ञाम् अकरोत्।[1] पाणिनेः मते अनुबन्धस्य योजना गुणस्य वृद्धेः आगमादीनां च विशेषकार्येण निमित्तं कृता। बोपदेवोऽपि अस्यैव मार्गस्य समर्थनं कुर्वन् आगमस्य आदेशस्य गुणस्य वृद्धेश्च कार्यार्थमेव इत्वर्णानां प्रयोगं करोति। व्याकरणशास्त्रेऽपि अनुबन्धशब्दस्य लक्षणं कुर्वन् कथितम्-

**इत्संज्ञकत्वमनुबन्धत्वम् इत्संज्ञायोग्यत्वमनुबन्धत्वम्।**

सामान्यतः अनुबन्धस्य किमपि किमपि प्रयोजनम् तु अवश्यमेव भवति। परन्तु बहुषु स्थलेषु अनुबन्धस्य कार्यविशेषस्य सम्बन्धो न भवति। अपितु एतेषु स्थलेषु अनुबन्धः केवलम् उच्चारणार्थायैव स्पष्टतायै च भवति।

आचार्यः पाणिनिः अनुबन्धानाम् इत्संज्ञासम्बद्धानां[2] केषाँचित् सूत्राणां विधानम् अकरोत्। तत्पश्चात् "**तस्य लोपः**" इत्यनेन सूत्रेण अनुबन्धास्य लोपं दर्शयित्वा अनेकेषां सूत्राणां माध्यमेन कार्याणां विधानम् चाकरोत्। किन्तु मुग्धबोधे इत्संज्ञकवर्णानां निर्देशो वृत्तावेव विद्यते। सूत्रेषु एतेषां पृथक् निर्देशो न कृतः। मुग्धबोधे प्रयुक्तानाम् अनुबन्धानां स्वरूपं प्रयोजनं च पाणिनेः तुल्यमेव वर्तते। परं बहुषु स्थलेषु उभयोः पर्याप्ता भिन्नतापि दृश्यते। यस्य कारणं विद्यते बोपदेवीयशास्त्रे वैदिकप्रक्रियायाः अभावः। अत्र द्वयोः कृत्प्रत्ययगतानुबन्धानां तुलनात्मकं प्रयोजनं निर्दिष्टम् अस्ति-

**इ अनुबन्धः**- आचार्येण पाणिनिना कृत्प्रत्ययेषु[3] "**इ**" अनुबन्धः केवलम् उच्चारणस्य सौकर्याय एव प्रयुक्तोऽस्ति। मुग्धबोधे[4] "**इ**" अनुबन्धः प्रयुक्तेऽपि अस्य अनुब-

---

१. मु.-इत्कृते ४
२. हलन्त्यम्, आदिर्ञिटुडवः, चुटू, लशक्वतद्धिते, षः प्रत्ययस्य
३. पा.अ.- नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३/१/१३४
४. मु.- णिनि. ६६०

न्धस्य प्रयोजनं बोपदेवेन स्पष्टो न कृतः। प्रयोगकारणाद् एनम् अनुबन्धमपि उच्चारणस्य सौकर्याय एव स्वीकर्तुं शक्यते।

**ऋ अनुबन्धः**- पाणिनेः शतृप्रत्यये **ऋ** अनुबन्धस्य प्रयोजनम् ''**उगितश्च**''[१] सूत्रेण ''**ङीप्**'' प्रत्ययस्य विधानकरणं विद्यते। बोपदेवस्यापि शतृ तथा स्यतृ प्रत्यययोः ''**ऋ**'' अनुबन्धस्य प्रयोजनं स्त्रीत्वविवक्षायां ''**ष्ट्रिनञ्ववाहनादादेरीप्**''[२] सूत्रेण ''**ईप्**'' इत्यस्य प्रत्ययस्य विधानकरणं विद्यते।

**क अनुबन्धः**- पाणिनेः क्यप्, क, कप्, टक्, सक्, कञ्, क्वनिप् इत्यादिषु प्रत्ययेषु ''**क**'' अनुबन्धं द्रष्टुं शक्यते। एतेषु ''**कित्**'' इत्यस्य प्रयोजनं गुणवृद्धेः निषेधः[३] सम्प्रसारणं[४] आलोपः[५] अनुनासिकस्य लोपः[६] उपधायाः लोपश्च[७] बोधिताः। परं बोपदेवस्य मतौ अपि ''**कित्**'' प्रयोजनं पाणिनेः समानमेव वर्तते। मुग्धबोधस्य सक्, यक्, क्यप्, इत्यादिषु अनेकेषु कृत्प्रत्ययेषु ''**क**'' अनुबन्धः प्राप्यते। यस्य मुख्यं प्रयोजनं गुणस्य वृद्धेश्च[८] निषेधकरणं वर्तते।

**ख अनुबन्धः**- अष्टाध्यायां खश्, खच्, ख्युन्, खल्, खुकञ्, इत्यादिषु कृत्प्रत्ययेषु ''**ख**'' इत्संज्ञकः प्राप्तो भवति। यस्य मुख्यं प्रयोजनं ''**मुम्**'' इत्यस्य आगमकरणमस्ति।[९] मुग्धबोधस्य खि, खष्, खिष्णु, खुकञ्, खल्, इत्यादिषु ''**ख**'' इत्यस्य इत्करणं बोपदेवोऽपि ''**मन्**'' **इत्यस्य** आगमकरणाय अकरोत्।[१०] अत्रापि पाणिनिना सह बोपदेवः साम्यं स्थापयति।

**ग अनुबन्धः**- पाणिनिः ग्स्नुप्रत्यये गकारानुबन्धम् अस्थापयत्। यस्य फलं ''**ग्क्ङिति च**'' इत्यनेन सूत्रेण गुणस्य वृद्धेश्च निषेधकरणं विद्यते। परम् आचार्यस्य बोपदेवस्य प्रत्ययेषु ''**ग**'' अनुबन्धस्य अभावो वर्तते।

**घ अनुबन्धः**- पाणिनेः घञ् घुरच् घिनुण् इत्यादिषु ''**घित्**'' प्रयोजनं ''**चजोः कु**

१. पा.अ.-४/१/६
२. मु.- २५७
३. पा.अ.- ग्क्ङिति च १/१/५
४. पा.अ.- वचिस्वपि यजादीनां किति ६/२/५
५. पा.अ.- आतो लोप इटि च ६/४/६४
६. पा.अ.- अनिदितां हल उपधायाः क्ङिति ६/४/२४
७. पा.अ.- गमहनजनखनघसां लोपः क्ङित्यनङि ६/४/९८
८. मु.- णुर्षङ् च क्ङिति ६४२
९. पा.अ.- अरुर्द्विषदजन्तस्य मुम् ६/३/६७
१०. मु.- खित्यव्याजरुषो १०१४

**घिण्ण्यतोः**'' इत्यनेन कुत्वादिकरणमस्ति। मुग्धबोधेऽपि ''**घ्यण्**'' प्रत्ययं विहाय अन्येषु कृत्प्रत्ययेषु घित्करणस्य उद्देश्यं चकारस्य जकारकरणं ककारस्य गकारकरणं च वर्तते।[१] अस्मिन् अनुबन्धे बोपदेवस्य मतं पाणिनेः मतेन सह साम्यम् अस्ति।

**ङ अनुबन्धः**:- पाणिनिः अङ् नङ् नजिङ् प्रत्ययेषु ''**ङ**'' अनुबन्धम् अस्थापयत्। यस्य फलम् ''**ग्क्ङिति च**'' सूत्रेण गुणस्य वृद्धेश्च निषेधकरणं वर्तते। तथा च छकारस्य ''**ष**'' आदेशकरणमस्ति।[२] बोपदेवः ङनज् नङ् ङ प्रत्ययानां परे स्थिते ''**ङ**'' अनुबन्धस्य कारणेन गुणस्य वृद्धेश्च निषेधं मन्यते।[३] अत्रापि बोपदेवस्य पाणिनेः मतेन सह साम्यमस्ति।

**च अनुबन्धः**:- अथुच् आलुच् अच् इष्णुच् कुरच् इत्यादिषु प्रत्ययेषु पाणिनिः ''**च**'' अनुबन्धं मन्यते। यस्य प्रयोजनं वैदिकस्वरस्य अभिज्ञानमस्ति। ''**चितः**''[४] सूत्रेण चित् प्रत्ययान्तेन अन्तोदात्तो भवति। अपितु बोपदेवस्य मुग्धबोधे वैदिकप्रक्रियायाः अभावकारणात् तत्र ''**च**'' अनुबन्धस्य प्रयोजनं कृत्प्रत्ययेषु पदस्य अव्ययत्वस्य[५] निर्देशकरणम् अस्ति। यत् विच् चतुम् क्त्वाच् चणम् इत्यादिषु प्रत्ययेषु ''**च**'' अनुबन्धः प्राप्तो भवति।

**ञ अनुबन्धः**:- पाणिनेः इञ् उकञ् कञ् इत्यादिषु कृत्प्रत्ययेषु ञितः फलं ''**अचोऽञ्णिति**'' इत्यनेन सूत्रेण वृद्धिकरणमस्ति। अत्र बोपदेवस्य मतं पाणिनेः मतेन सह साम्यं स्थापयति। मुग्धबोधस्य खुकञ् ञुक् इत्यादिषु ''**ञ**'' अनुबन्धः प्राप्तो भवति। यस्य परे भूते सति धातोः अन्त्यस्य इचः उपधायाः अकारस्य च वृद्धेः निर्देशो भवति।[६]

**ट अनुबन्धः**:- मुग्धबोधस्य णनट् टक् खनट् विट् अनट् इत्यादिषु प्रत्ययेषु ''**ट**'' अनुबन्धः पाणिनेः ''**टित्**'' प्रयोजनेन सममेव स्त्रीत्वस्य विवक्षायां ''**ईष्**'' इत्यस्य विधानकरणम् अस्ति।[७] पाणिनिरपि टिदन्तेन ''**ङीप्**'' इत्यस्य विधानं करोति।[८]

**ड अनुबन्धः**:- पाणिनिः निज शास्त्रे ''**ड**'' अनुबन्धं डु डर् डस् इत्यादिषु प्रत्ययेषु

---

१. मु. चजोः कगौ घिण्यति ९७२
२. पा.अ.- च्छ्वोः शूडनुनासिके च ६/४/१९
३. मु.- णुर्घडश्चाक्ङिति ५४२
४. पा.अ.- ६/१/१६३
५. मु.- चि यं व्यम् ९४
६. मु.- ञ्णित्यन्त्येजुडटो ५१७
७. मु.- २५७
८. पा.अ.- टिड्ढाणञ् ४/१/१५

मन्यते। यस्य प्रयोजनं प्रकृतेः टिलोपस्य निर्देशकरणं[१] वर्तते। बोपदेवोऽपि टिलोपस्य उद्देश्येन कृत्प्रत्ययेषु डित्करणस्य विधानं करोति।[२] अतः अस्मिन् अपि बोपदेवः पाणिनेः मतेन सह साम्यं स्थापयति।

**ण अनुबन्धः**:- मुग्धबोधे यण् णक् ण णनट् विण् णिन् धयण् णन् णि इत्यादिषु प्रत्ययेषु "**ण**" अनुबन्धस्य प्रयोजनं अन्त्यस्य "**इच्**" इत्यस्य "**उङ्**" इत्यस्य च उपधावृद्धिकरणम् अस्ति।[३] यस्मिन् सः पाणिनिना सह साम्यं स्थापयति। पाणिनिरपि ण्वुल् अण् इनुण् घिनुण् ण्यत् इत्यादिषु प्रत्ययेषु "**णित्**" विधानं कुत्रचित् "**अचोऽञ्णिति**" सूत्रेण वृद्धिकरणं कुत्रचित् "**अत उपधायाः**" सूत्रेण उपधा-वृद्धिकरणाय कुत्रचित् "**आतो युक् चिण्कृतोः**" सूत्रेण युक् आगमकरणाय च कृतवान्।

**त अनुबन्धः**:- आचार्यः पाणिनिः तव्यत् यत् ण्यत् इत्यादिषु प्रत्ययेषु "**त**" अनुब-न्धां वैदिक प्रयोजनाय मन्यते। अस्य फलं "**तित् स्वरितम्**" सूत्रेण "**तित्**" प्रत्ययस्य आन्तोदात्तकरणं वर्तते। बोपदेवः "**त**"[४] अनुबन्धं तु मन्यते परन्तु अस्य प्रयोजनं कुत्रापि स्पष्टं न कृतवान्। अस्य कारणं मुग्धबोधे वैदिकप्रक्रियायाः अभावो भवितुमर्हति।

**न अनुबन्धः**:- पाणिनेः नित् प्रयोजनं वैदिकभाषायाः दृष्ट्या उपयोगी विद्यते[५] यतो हि अध्यैन् इन् खुन् अतृन् थकन् इत्यादिषु प्रत्ययेषु न अनुबन्धः प्राप्तो भवति। बोपदेवीयस्य शास्त्रे वैदिकप्रक्रियायाः अभावभवनेन प्रत्ययगतानुबन्धो नास्ति। किन्तु आगमे "**न**" अनुबन्धस्य प्रयोगो मिलति।

**प अनुबन्धः**:- पाणिनीयस्य कृत् प्रकरणे क्यप् अप् क्वरप् क्विप् कप् इत्यादिषु प्रत्ययेषु "**प**" अनुबन्धः प्राप्यते यस्य फलं "**ह्रस्वस्य पिति कृति तुक्**" इत्यनेन सूत्रेण "**तुक्**" आगमो भवति। तथा च वैदिकदृष्ट्या "**अनुदात्तौ सुप्पितौ**" इत्यनेन सूत्रेण प्रत्यये अनुदात्तस्य विधानकरणं वर्तते। बोपदेवेन पित्करणं पूर्ववर्तिनां वैयाकरणानां अनुकरणेन मन्यते। क्वनिप् क्विप् वनिप् क्ष्वरप् इत्यादिषु कृत्प्रत्ययेषु "**प**" अनु-

---

१. पा.अ.- टेः ६/४/१४३
२. मु.- टेर्लोपो ङिति१२६
३. मु.- ञ्णत्यन्त्येजुङटो ३७७
४. मु.- आत् १०६ इत् १७३ उत् १७३ अत् ५२५
५. पा.अ.- ञ्नित्यादिर्नित्यम् ६/१/१९७

बन्धः पाणिनेः समानमेव ह्रस्वात् परे **"तन्"**[1] इत्यस्य आगमनिर्देशाय भवति।

**म अनुबन्धः**- **"म"** इत्यस्य अनुबन्धस्य प्रयोजनं पाणिनेः बोपदेवस्य च दृष्टौ समानमेव विद्यते। द्वावेव आगमस्य निर्देशकरणाय **"म"** अनुबन्धं मन्येते। आचार्यः पाणिनिः **"नुम्"** आगमस्य विधानं कर्तुं **"मिदचोऽन्त्यात्परः"** सूत्रेण अन्तिमात् अचः परे **"नुम्"** इत्यस्य आगमं करोति। तथा च बोपदेवः **"म"** अनुबन्धेन युक्तागमं[2] निर्दिष्टपदस्य आदौ प्रयुक्तं करोति।

**र अनुबन्धः**- बोपदेवीयस्य मुग्धबोधस्य प्रत्ययेषु **"र"** अनुबन्धस्य अभावोऽस्ति किन्तु पाणिनिः अस्य अनुबन्धस्य वैदिकदृष्टेः कारणात् विधानं करोति। पाणिनेः अनीयर् केलिमर् इत्यत्र **"र"** अनुबन्धः **"उपोत्तमं रिति"** इत्यनेन सूत्रेण उपोत्तमवर्णम् उदात्तं विधतुम् इत्यस्य प्रयोजनाद् गृहीतवान्।

**ल अनुबन्धः**- पाणिनिना णमुल् ण्वुल् कमुल् इत्यादिषु प्रत्ययेषु **"ल"** अनुबन्धः मन्यते। अस्य प्रयोजनं **"लिति"** इत्यस्मात् पूर्वम् उदात्तकरणं वर्तते। मुग्धबोधे अल् तथा खल् कृत्प्रत्ययेषु प्राप्तस्य लकारानुबन्धस्य प्रयोजनं बोपदेवेन स्पष्टो न कृतः। पूर्वानुकरणस्य आधारे एव बोपदेवस्य एषः अनुबन्धः स्वीकर्तुं शक्यते।

**श अनुबन्धः**- पाणिनेः चानश् शतृ खश् इत्यादिषु कृत्प्रत्ययेषु **"शित्"** प्रयोजनं सार्वधातुकसंज्ञा[3] तथा शपादिविकरणकरणं च विद्यते। बोपदेवस्य प्रयोजनमपि पाणिनेः समानमेव विद्यते। सः शतृप्रत्यये **"श"** अनुबन्धस्य विधानं सार्वधातुकसंज्ञायै[4] करोति।

**ष अनुबन्धः**- पाणिनिः षाकन् ष्ट्रन् इत्यादिषु प्रत्ययेषु **"ष"** अनुबन्धं मन्यते। यस्य प्रयोजनं षिदन्तेभ्यः प्रत्ययेभ्यः **"ङीप्"**[5] इत्यस्य विधानकरणम् अस्ति। मुग्धबोधस्य कृत्प्रत्ययेषु प्राप्तानुबन्धस्य अस्य प्रयोजनं पाणिनेः समानं **"षित्"** प्रत्ययान्तात् स्त्रीत्वविवक्षायां **"ईष्"** प्रत्ययस्य निर्देशकरणम् अस्ति। अनेन प्रकारेण पाणिनिः बोपदेवश्च अनुबन्धकरणे अनेकेषु स्थलेषु साम्यं प्रतिपादयतः।

**काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्।**

अस्याः उक्तेः अनुसारं पाणिनीयं शास्त्रं सम्पूर्णसंस्कृतवाङ्मयस्य अत्यन्तम् उपकारको

१. मु.- स्वस्य तन् पिति ९८२
२. मु.- १७
३. पा.अ.- तिङ् शित्सार्वधातुकम् ३/४/११३
४. मु.- पंचरः शिच्च ५३०
५. पा.अ.- षिद्गौरादिभ्यश्च ४/१/४

ग्रन्थो विद्यते। संस्कृतभाषायाः यावद् व्यवस्थितं वैज्ञानिकरीत्या वर्णनम् अष्टाध्यायां प्रस्तुतम् अस्ति तावद् उन्नतं कस्मिंश्चिदपि व्याकरणग्रन्थे न सम्भवति। अष्टाध्यायाः प्रेरणां प्राप्य एव पाणिनेः परवर्तिनि काले युगानुकूले भाषायां आगतवन्ति परिवर्तनानि व्याकरणस्य माध्यमेन व्यवस्थितानि कृतानि। येन साधुत्वं प्रतिपादनाय अनेकेषां व्याकरणानां रचना कृता। येषु मुग्धबोधम् अत्यन्तं संक्षिप्ततायां सरलशैल्यां च लिखितं महत्त्वपूर्णं व्याकरणम् अस्ति। तस्य अनुबन्धस्य पद्धतिः पाणिनेः प्रभाविता भवन्ती अपि पूर्णतया मौलिकतां प्रतिपादयति। पाणिनिः एकसहैव इत्संज्ञायाः सम्बन्धीनां सूत्राणां विधानं विध ाय तत्पश्चात् तेषां लोपस्य व्यवस्थाम् अकरोत्। परन्तु बोपदेवः सर्वेषां इत्संज्ञकवर्णानां निर्देशं वृत्तौ एव अकरोत्। संक्षिप्ततायाः विशेषावधानं कुर्वन् पृथक् सूत्राणां रचना न कृता। अनेन प्रकारेण भाषायाः परिवर्तनानि परिवर्धनानि च समाहितानि कुर्वन्नपि बोपदेवः भाषायाः व्यवस्थाम् अत्यन्तसंक्षिप्तरूपे निज व्याकरणे अदर्शयत्।

अनेन प्रकारेण लघौ सरलशैल्यां च रचितस्य मुग्धबोधव्याकरणस्य कृत्प्रत्ययप्रकरणं पाणिनिना प्रभावितं भवदपि मौलिकतायाः प्रतिपादनं करोति। बोपदेवः संक्षेपीकरणस्य सरलतायाश्च लक्ष्यं कुर्वन् प्रत्ययानाम् अभीष्टरूपाणि यथा- ''**ण्वुल्**'' इत्यस्य स्थाने ''**अक**'' तथा ''**ल्युट्**'' इत्यस्य स्थाने ''**अन**'' इत्यादिकं स्वतन्त्रप्रत्ययस्य रूपे दर्शितवान्। अनेकेषु सूत्रेषु वर्णितानि क्षेत्राणि एकस्मिन्नेव सूत्रे परिगणयितुं तथा च वार्तिकानाम् अपि सूत्रेषु अन्तर्भावं कुर्वन् निज व्याकरणं सम्पूर्णम् प्रभावितं विधातुम् अत्यन्तम् उत्कृष्टं प्रयत्नम् चाकरोत्।

**सन्दर्भग्रन्थाः**

१ अग्रवालः वासुदेवशरणः, पाणिनिकालीनभारतवर्षः, चौखम्बा विद्याभवनम्, वाराणसी, द्वि. सं १९६९

२ अवस्थी शिवशंकरः वाक्यपदीयम्, चौखम्बा विद्याभवनम्, वाराणसी, २००१

३ ईश्वरचन्द्रः अष्टाध्यायी- भाग-१ चौखम्बा संस्कृतप्रतिष्ठानम् दिल्ली प्र.सं. २००४

४ उपाध्यायः बलदेवः, संस्कृतसाहित्यस्य इतिहासः, शारदासंस्थानम्, वाराणसी प्र.सं. १९८९

५ कुमारः अवनीन्द्रः व्याकरणमहाभाष्यम्, (प्रथम द्वितीयाह्निक) साहित्यभण्डारः मेरठः, २०००

६ ग्रोवरः शन्नो, बोपदेवस्य संस्कृतव्याकरणशास्त्रस्य योगदानम्, विद्यानिधिः प्रकाशनम्,

दिल्ली, १९९६
७ भट्टाचार्यः जीवानन्दः विद्यासागरः, मुग्धबोधव्याकरणम्, चौखम्बाविद्याभवनम्, वाराणसी, १९९४
८ मीमांसकः युधिष्ठिरः, संस्कृतव्याकरणशास्त्रस्य इतिहासः-भाग-१,रामलालः कपूरः ट्रष्ट, बहालगढम्, संवत् २०३०
९ वेदालंकारः रघुवीरः, काशिकासूत्रवृत्तिः, (प्रथम भाग) चौखम्बा पब्लिशर्स दिल्ली, प्र.सं. २००६

*****

'हरिप्रभा' वर्षम्-२०, अङ्कः-१०-१२ ( २०२३ ) ISSN 2278-0416

# पौराणिकवाङ्मयस्य विभाजनम्

***डॉ. विवेक शर्मा**

संस्कृतवाङ्मये पुराणानामतीवमहत्त्वपूर्णं स्थानमस्ति। पौराणिकवाङ्मयस्य बहुविध वैशिष्ट्यमस्ति यस्मिन् विभाजनमपि अन्यतममस्ति। विविधेषु ग्रन्थेषु विद्वद्भिः पुराणानां विभाजनं बहुविधरूपैः कृतम्। तेषु मुख्यानां बिन्दुशः विवरणमिदं वर्तते-

**१.आकारदृष्ट्या विभाजनम्-** पुराणसाहित्यस्यातीवविशालत्वात्तस्य विभाजनं सरलतया न कर्तुं शक्यते। सर्वप्रथमं तु आकारदृष्ट्या पौराणिकवाङ्मयस्य विभाजनं विचारयामः। एतादृशं पुराणानां विभाजनमधोलिखितप्रकारैर्विभिन्नविद्वद्भिः कृतमस्ति-

अ) पुराणसाहित्यस्य द्विविधं विभाजनम्।

आ) पुराणसाहित्यस्य त्रिविधं विभाजनम्।

इ) पुराणसाहित्यस्य चतुर्विधं विभाजनम्।

ई) पुराणसाहित्यस्य पञ्चविधं विभाजनम्।

**अ ) पुराणसाहित्यस्य द्विविधं विभाजनम्-** महापुराणोपपुराणभेदात् पुराण- साहित्यस्य प्रायः सर्वत्र द्विविधं विभाजनमुपलभ्यते। गरुड[1]-स्कन्द[2]-कूर्मादि[3] महापुराणेषु महापुराणानां सूचीभिः सहैवोपपुराणानां सूच्योऽपि प्राप्यन्ते। पुराणस्य द्विविधं विभाजनं प्रायः सर्वैरेव विद्वद्भिरपि विहितम्। मैक्डोनलमहाभागेन स्वकीये 'दि हिस्ट्री आफ इण्डियन लिट्रेचर' नाम्नि ग्रन्थे महापुराणोपपुराणभेदाभ्यां पुराणसाहित्यं द्विधा विभाजितम्।[4] पुराणसाहित्येऽपि पौराणिकवाङ्मयस्य द्विविधविभाजनमुपलभ्यते।[5] शिवपुराणस्य

---

* **सहायकाचार्य, संस्कृत विभाग, हिमाचल प्रदेश केन्द्रीय विश्वविद्यालय, धर्मशाला।**

**दूरभाष- ९४५९०५०३०३, ९८१६८२३८०५ ईमेल- drviveksharma.skt@gmail.com**

१. गरुडपुराणम् (पूर्वखण्डः), २१५/१७-२०

२. स्कन्दपुराणम्, रेवाखण्डः, १/४६-५२

३. कूर्मपुराणम्, १/१७-२०

४. दि हिस्ट्री आफ इन्डियन लिट्रेचर (मैक्डोनल), पृष्ठः २५४....

५. सत्यवाक्यानि सर्वाणि पुराणानि द्विविधानि च।
उपपूर्वं महत्पूर्वं पुराणं द्विविधं मतम्।। बृहद्धर्मपुराणम्, २५/१८

वायवीयसंहितायामपि पुराणानां द्वौ भेदावित्थं प्रदर्शितौ स्तः[१]-

**क ) बृहत्पुराणानि** - प्रतीयते यत् बृहत्पुराणैर्महापुराणान्येवोक्तानीति।

**ख ) सूक्ष्मपुराणानि** - एभिः सूक्ष्मपुराणैरुपपुराणान्येव निर्दिष्टानीति ज्ञायते। इत्थं पुराणसाहित्यस्य द्विविधं विभाजनं सर्वैरेव स्वीकृतम्। द्विविधविभाजनमेतत् पुराणसाहित्येऽपि प्राचीनकालादेव समुपलभ्यते। यस्मात् विभाजनस्य प्रामाण्यमस्त्येवेति न सन्देहः।

**आ ) पुराणसाहित्यस्य त्रिविधं विभाजनम्-** पुराणविषयकग्रन्थानामनुशीलनेन पौराणिकवाङ्मयस्य त्रिविधविभाजनमपि ज्ञायते। श्रीकृष्णमणित्रिपाठिमहोदयः स्वकीयेषु त्रिषु ग्रन्थेषु पुराणानां प्रकारत्रयेण विभाजनमकरोत्। एतेषां 'पुराणतत्त्वमीमांसायाम्'[२] 'अष्टादशपुराणपरिचये'[३], 'पुराणपर्यालोचने'[४], प्राचीनचरित्रकोशे[५] च पुराणसाहित्यस्य त्रिविधं विभाजनं समुपलभ्यते। विभाजनप्रकारोऽयं वर्तते-

**क ) महापुराणानि-** महापुराणान्येव प्रायशः पुराणानीत्युच्यन्ते। एतेषां ब्रह्मादीनां नामस्वपि न विदुषां काचिद् विप्रतिपत्तिर्दृश्यते। एतान्यष्टादशसङ्ख्याकानि प्रथितानि सन्ति। उक्तञ्च विष्णुपुराणे येषामष्टादशोपपुराणानां नाम्नां वर्णनं वर्तते तानि सर्वाणि महापुराणानि[६] .....।

**ख ) उपपुराणानि-** वक्ष्यमाणानामुपपुराणानां विभिन्नस्थानेषु भिन्न-भिन्नसूचीषु विभिन्ननामानि समुपलभ्यन्ते। प्रतिसूच्यामेतेषां सङ्ख्याऽष्टादशैव निर्धारिता।

**ग ) औपपुराणानि-** औपपुराणान्यपि अष्टादश सन्ति। औपपुराणानां नामसु कतिपयानामुपपुराणानां नाम्नां पुनरावर्तनमेवास्ति। बृहद्विवेकनामके ग्रन्थे औपपुराणानां नामानि श्लोकबद्धानि प्राप्यन्ते।[७] औपपुराणानामियं सूची[८] अस्ति-

---

१. शिवपुराणम्, द्वितीयभागः, वायव्यसंहिता....
२. पुराणतत्त्वमीमांसा, पृष्ठः १०८ .....
३. अष्टादशपुराणपरिचयः, पृष्ठः २३, पङ्क्तिः १७
४. पुराणपर्यालोचनम् (गवेषणात्मकभागः), पृष्ठः १५१, पङ्क्तिः २५
५. प्राचीनचरित्रकोशः, पृष्ठः ९२५, पङ्क्तिः ३२
६. विष्णुपुराणम्, ३/५६/२४ .....
७. बृहद्विवेकः, ३ ....
८. आद्यं सनत्कुमारं च नारदीयं बृहच्च यत्। आदित्यं मानवप्रोक्तं नन्दिकेश्वरमेव च॥
कौर्म्यं भागवतं ज्ञेयं वाशिष्ठं भार्गवं तथा। मुद्गलं कल्कि देव्यौ च महाभागवतं तथा॥
बृहद्धर्मं परानन्दं वहिनं पशुपतिं तथा। हरिवंशं ततो ज्ञेयमिदमौपपुराणकम्॥
तत्रैव, ३/३७-३८

| | | | | | |
|---|---|---|---|---|---|
| सनत्कुमारम् | मानवम् | मुद्गलम् | हरिवंशम् | देवीपुराणम् | पशुपतिपुराणम् |
| बृहन्नारदीयम् | आदित्यम् | वसिष्ठम् | कल्कि | महाभागवतम् | परानन्दम् |
| नन्दिकेश्वरम् | कौर्मम् | भार्गवम् | बृहद्धर्मम् | बहिनम् | भागवतम् |

**इ) पुराणसाहित्यस्य चतुर्विधं विभाजनम्** - पुराणसाहित्यस्य चतुर्विधात्मकं विभाजनमप्युपलभ्यते। श्री हनुमानप्रसादपोद्दार-चिम्मनलालगोस्वामिमहोदयाभ्यां कल्याण-पत्रिकायाः "संक्षिप्तपुराणाङ्के" सम्पादकीयलेखे[1] पुराणसाहित्यस्य चतुर्विधं विभाजनं विहितम्। अत्रापि चतुर्विधविभागेषु सङ्ख्याऽष्टादशैव स्वीकृता। तेषां नामावल्योऽपि अत्र प्रकाशिता-

**क) महापुराणानि** - (पूर्वोक्तम्)

**ख) उपपुराणानि** - (पूर्वोक्तम्)

**ग) अतिपुराणानि** - अस्मिन् भागेऽतिपुराणानां या नामावलिर्दर्शिता सा बृहद्विवेके प्रदर्शितैः औपपुराणैः सह साम्यं भजते। अस्य भागस्य नामावलिरियमस्ति, यस्याः सङ्ख्याऽपि अष्टादशैव -

| | | | | | |
|---|---|---|---|---|---|
| कार्त्तवम् | मुद्गलम् | सौरम् | महाभागवतम् | भार्गवम् | गर्गम् |
| ऋजुम् | पशुपतिम् | परानन्दम् | देवी | वाशिष्ठम् | चण्डी |
| आदि | गणेशम् | बृहद्धर्मम् | कल्कि | कौर्मम् | लक्ष्मी |

**घ)पुराणानि**- महापुराणोपपुराणातिपुराणातिरिक्तानि पुराणानि भागेस्मिन् सम्मिलितानि। अस्य भागस्य नामावलिरत्र प्रस्तूयते-

| | | | | |
|---|---|---|---|---|
| बृहद्विष्णुम् | मार्कण्डेयम् | भविष्योत्तरम् | बृहद्वामनम् | लघुवैवर्तम् |
| शिवोत्तरखण्डम् | पशुपतिम् | वाराहम् | बृहन्मत्स्यम् | पञ्चप्रकारात्मकं |
| लघुबृहन्नारदीयम् | वह्नि | वामनम् | स्वल्पमत्स्यम् | भविष्यम् |

किन्तु पुराणसाहित्यस्यैतद् विभाजनं कस्माद् ग्रन्थादवतारितमिति तत्र न निर्दिष्टम्। कदाचिदिदं विभाजनं नितान्तकल्पितमेव स्यादिति सन्देहात् प्रमाणत्वं न प्राप्यति।

**ई) पुराणसाहित्यस्य पञ्चविधं विभाजनम्** - पौराणिकवाङ्मयस्य पञ्चविधं विभाजनमपि समुपलभ्यते। वस्तुतः पुराणसाहित्ये महापुराणोपपुराणानां निर्माणानन्तरमपि पुराणशैल्यां पुराणोपपुराणशब्दवाच्या ग्रन्थाः समये-समये विरचिता अभवन्। अत एव पुराणसाहित्यस्य कलेवरं वर्द्धयन्त औपपुराणादीनां प्रकारतां गताः। "श्रीधर्मकल्पद्रुम"

१. "कल्याण"-संक्षिप्तश्रीस्कन्दमहापुराण निवेदन और क्षमाप्रार्थनाख्यसम्पादकीयलेखः, पृष्ठः ७-८

नामके ग्रन्थे पञ्चप्रकारकाणि पुराणानि निर्दिष्टानि सन्ति।[1] एतेषामुल्लेखः श्रीकृष्णमणि-त्रिपाठिना स्वकीये पुराणपर्यालोचने विहितोऽस्ति।[2] पञ्चविधं विभाजनमत्रोच्यते-

**क) महापुराणानि** (पूर्वोक्तम्)

**ख) उपपुराणानि** (पूर्वोक्तम्)

**ग) औपपुराणानि** (पूर्वोक्तम्)

**घ) उपोपपुराणानि** - एतेषां विषये कुत्रापि उल्लेखः न वर्तते, तथापि वक्तुमिदं शक्यते यदिमानि पुराणान्युपपुराणानामाधारमादाय विरचितानि सन्ति। एषां नामावलिरपि कुत्रापि नोपलभ्यते। तस्मादेतेषां विषये किञ्चिदपि कथनमौचित्यं न लभते।

**ङ) उपौपपुराणानि** - इमान्युपौपपुराणान्यौपपुराणानामाश्रयेण निर्मितानि सन्तीत्येषां नामभिः प्रतीयते। एषां विषयेऽपि न काऽपि नामावलिर्न च किमपि प्रामाणिकं तथ्यं विद्यते। एतस्मादेव कारणादत्र किञ्चिद् वक्तुं न शक्यते।

**२. त्रिगुणभेदानुसारं विभाजनम्-** पुराणानां विभाजनस्य किञ्चित् भिन्नवर्णनं पद्मपुराणे वर्तते। पद्मपुराणानुसारं शिवेन सम्बद्धानि पुराणानि तामसपुराणानि सन्ति। ब्रह्मणा सम्बद्धानि राजसिकपुराणानि, विष्णोः च सम्बद्धानि राजसिकानि सन्ति। अत्र केवलं त्रिविधदेवेभ्यः सम्बद्धानि पुराणानि स्वीकृतानि सन्ति।[3] एतदनुसारं वर्गीकरणमिदमस्ति-

- **सात्विकपुराणानि-** विष्णु-भागवत-नारदीय-गरूड-पद्म-वराहपुराणानि च।
- **राजसिकपुराणानि-** ब्रह्माण्ड-ब्रह्मवैवर्त-ब्रह्म-मार्कण्डेय-भविष्य-वामनपुराणानि च।
- **तामसिकपुराणानि-** मत्स्य-कूर्म-लिङ्ग-शिव-अग्नि-स्कन्दपुराणानि च।

देवीभागवतेऽपि पुराणानां त्रिविधविभाजनं स्वीकृतम्।[4]

---

१. पुराणसाहित्यादर्शः, पृष्ठः ६२, पङ्क्तिः २२

२. पुराणपर्यालोचनम् (गवेषणात्मक भागः), पृष्ठः १५१, पङ्क्तिः ४

३. मात्स्यं कौर्मं तथा लैङ्गं शिवं स्कांदंतथैव च।
आग्नेयं च षडेतानि तामसानि निबोध मे।।
वैष्णवं नारदीयं च तथा भागवतं शुभम्।
गारूडं च तथा पाद्मं वाराहं शुभदर्शने।।
सात्विकानि पुराणानि विज्ञेयानिशुभानिवै।
ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च।।
भविष्यं वामनं ब्राह्मं राजसानि निबोध मे।। पद्मपुराणम्, उत्तरखण्डः,२३५/१८-२२

४. त्रिविधानि पुराणानि शास्त्राणि विविधानि च। देवीभागवतपुराणम्, १/१/१३

**३. मानवीकरणं कृत्वा विभाजनम्-** पुराणपुरुषस्य मानवीकरणं कृत्वा तस्य कृत्स्नस्य शरीरस्य वर्गीकरणं कृतं विद्यते।[1] तद्यथा-

| | | | | | |
|---|---|---|---|---|---|
| शिरो ब्राह्मम् | वामबाहुः शैवम् | दक्षिणपादः मार्कण्डेयम् | वामसक्थिः ब्रह्मवैवर्तम् | रोमः स्कान्दम् | स्नायुर्मात्स्यम् |
| हृदयं पाद्मम् | जानुः भागवतम् | वामपादः आग्नेयम् | दक्षिणगुल्फो लिङ्गम् | त्वग्वामनम् | मज्जा गारुडम् |
| दक्षिणबाहुर्वैष्णवम् | नाभिः नारदम् | दक्षिणसक्थि-भविष्यम् | वामगुल्फो वाराहम् | पृष्ठभागः कौर्मम् | अस्थि-ब्रह्माण्डम् |

**४. सम्बद्धदेवतानुसारं विभाजनम्-** देवतानां गुणगणानुसारं पुराणं त्रिधा विभज्यते। तद्यथा स्कान्दे-

**अष्टादशपुराणेषु दशभिर्गीयते शिवः।**
**चतुर्भिर्भगवान् ब्रह्मा द्वाभ्यां देवी तथा हरिः॥**[2]

एतदनुरूपं शिव-भविष्य-लिङ्ग-स्कन्द-मत्स्य-कूर्म-वामन-वाराहाग्नि-नारदपुराणानि शिव-सम्बद्धपुराणानि, ब्रह्म-पद्म-ब्रह्माण्ड-ब्रह्मवैवर्तानि ब्रह्म-सम्बद्धपुराणानि, देवीभागवतमार्कण्डेयपुराणे देवी-सम्बद्धपुराणे, विष्णुगरुडे च श्रीहरि-सम्बद्धपुराणे स्तः। देवतावादमाधारीकृत्य पुराणानामितोऽपि सूक्ष्मवर्गीकरणं मत्स्यपुराणे वर्णितमस्ति। एतस्यानुसारं विष्णुसम्बद्धानि भवन्ति सात्विकानि पुराणानि, यत्र च ब्रह्मणः अग्नेः च प्रतिपादनं भवति तानि राजसिकपुराणानि, एवञ्च तामसिकपुराणेषु च शिवस्य महिम्नः वर्णनं भवति। इतरेषु पुराणेषु सरस्वत्याः पितृणाञ्च माहात्म्यं यत्र भवति, तानि पुराणानि संकीर्णानि सन्ति।[3]

महापुराणानामिवोपपुराणानां वर्गीकरणं सहजं नास्ति। यतोहि उपपुराणानां सङ्ख्या अधिकाऽस्ति। सङ्ख्याधिक्यात् एतेषां श्रेणीबन्धनं दुष्करम्। अन्यत्कारणमस्ति यत् एतेषां रचना दीर्घकालखण्डे अभवत्, यस्मात् व्यावहारिकं सामान्यवर्गीकरणञ्च

---

१. ब्राह्मंमूर्धाहरेरेवत्हृदयंपद्म..पुराणावयवो हरिः। पद्मपुराणम्, स्वर्गखण्डः,६२/२-७

२. स्कन्दपुराणम्, केदारखण्डः, १

३. सात्त्विकेषु पुराणेषु माहात्म्यमधिकं हरेः।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः॥
तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च।
सङ्कीर्णेषु सरस्वत्याः पितृणाञ्च निगद्यते॥ मत्स्यपुराणम्, ५३/६७-६८

असम्भवम्। तथापि स्थूलरूपेण उपपुराणानां वर्गीकरणं पञ्चवर्गेषु भवितुं शक्नोति। सौर-शाक्त-शैव-वैष्णव-गाणपत्यानि च। कतिपयोपपुराणानि धर्मशास्त्रीयवर्गेऽपि स्थापयितुं शक्यन्ते। तर्हि स्थूलरूपेण षड्वर्गाः जाताः। एतेषां षड्वर्गाणां व्याख्या इयमस्ति-

**४.१ सौरोपपुराणानि-** वैदिककाले सूर्योपासना प्रामुख्येणाऽसीत्। तत्र सूर्यः जगतः आत्म-रूपेण वर्णितः।[1] उपनिषद्वाङ्मयेऽप्युक्तं यत् "सूर्यो यथा सर्वलोकस्य चक्षुः"।[2] वर्तमानसमयेऽपि सूर्योपासनायाः स्वरूपं दृश्यते। उत्कलस्य कोणार्कसूर्यमन्दिरस्य भारते महत्त्वपूर्ण स्थानमस्ति। व्यावहारिकजीवनमपि पश्यामश्चेत् तर्हि आभारतं सूर्यनमस्कारस्य प्रचारः अस्ति, यतोहि प्रायशः सम्पूर्णभारते प्रातःकालीनसमये सूर्यनमस्कारः क्रियते। ब्रह्म[3] मार्कण्डेय[4] प्रभृतेषु महापुराणेषु सूर्योपासनायाः वर्णनं विस्तृतरूपेणास्ति। उपपुराणेष्वपि सूर्योपासनायाः स्वरूपं यत्र-तत्र दृश्यते। सूर्योपासनायाः प्रतिनिधिभूतमुपपुराणमस्ति साम्बपुराणम्।[5] साम्बपुराणे मुख्यतः सूर्योपासनायाः वर्णनमस्ति। अस्य पुराणस्यारम्भः भानुदेवस्य स्तुति-वन्दनया भवति।[6] साम्बपुराणस्य तृतीयाध्यायस्यान्ते कथितमस्ति यत् भगवतः सूर्यस्य द्वादशरूपेषु सम्पूर्णसंसारोऽयं व्याप्तः। एतानि रूपाणि ज्ञात्वा श्रुत्वा पठित्वा च मनुष्यः सूर्यलोके सुशोभितो भवति।[7] अन्येषु पुराणेष्वपि सूर्यसम्बद्धवर्णन-मुपलभ्यते। कपिलपुराणे सूर्यस्य एकोनविंशतिः नाम्नां वर्णनमस्ति।[8] नारसिंहपुराणे तु आदित्यस्य १०८ नाम्नामुल्लेखो वर्तते।[9]

**४.२ शाक्तोपपुराणानि-** भारतवर्षे जनाः देव्याः उपासनां विशिष्टतया कुर्वन्ति। मार्कण्डेयसदृशेषु महापुराणेषु शक्तेः उपासनायाः विस्तृतवर्णनमस्ति। महापुराणैरिवोपपुराणेष्वपि

---

१. सूर्य आत्मा जगतस्तस्थुषश्च। ऋग्वेदः, १/११५/१

२. कठोपनिषद्, २ / २ / ११

३. ब्रह्मपुराणम्, अध्यायः २१-२३

४. मार्कण्डेयपुराणम्, अध्यायः ९८-१००

५. उपपुराणदिग्दर्शन, पृष्ठः ३९५, पङ्क्तिः ३

६. तिमिर करि किरातः प्रत्यहं सप्रभावः। कमल विपिन बन्धुः पुण्य कारूण्य सिन्धुः॥
भवन भुवन दीपः कुष्ठ पाप प्रदीपः। सुरमुनिकृतसेवः पातु वो भानुदेवः॥
साम्बपुराणम्, मङ्गलाचरणम्

७. एवं द्वादशभिस्तेन सवित्रा परमात्मना
कृत्स्नं जगदिदं व्याप्तं मूर्तिभिस्तु नराधिप
इत्येवं द्वादशादित्यं जगज्ज्ञात्वा तु मानवः
नित्यं श्रुत्वा पठित्वा च सूर्यलोके महीयते॥ साम्बपुराणम्, ४/२३-२५

८. कपिलपुराणम्, ६ / ४८ - ५१

९. नरसिंहपुराणम्, १९ / ३ - १४

शक्त्याः वर्णनमस्त्येव। एतानि सर्वाण्युपपुराणानि शाक्तवर्गस्य अंगानि सन्ति। अस्मिन् वर्गे सन्त्युपपुराणानि–कालिकापुराणम्, देवीपुराणम्, महाभागवतम्, बृहन्नन्दिकेश्वरपुराणम्, शारदापुराणम्, देवीभागवतम् चेति।[1] देवीपुराणे सुन्दरस्तुत्या देव्याः दशरूपाणां वर्णनमस्ति।[2]

**४.३ शैवोपपुराणानि**– उपपुराणेषु शिवमहिम्नः विस्तृतं वर्णनमस्ति। अत्र शिवतत्त्वस्य दार्शनिकव्याख्या कृताऽस्ति। शिवेन सम्बद्धरोचकाख्यानानि प्रस्तुतान्युपपुराणेषु। अत्र शिवस्य अर्चनायाः चर्चा विस्तृततरूपेण कृताऽस्ति। शिवमहिमसम्बद्धोपपुराणानां नामावली वर्तते–

सौरपुराणम्, शिवधर्मपुराणम्, माहेश्वरम्, पशुपतिः, स्कान्दम्, शैवः, पाराशरश्चेति।[3] उपपुराणेषु शैवोपासनायाः का स्थिति आसीत्, अस्याः ज्ञानं तु अस्मादेव श्लोकाद् जायते–

**कुलं पवित्रं पितरः समुद्धृताः, वसुन्धरा तेन च पाविता द्विजाः।**
**सनातनोऽनादिरनन्तविग्रहो, हृदि स्थितो यस्य सदैव शङ्करः॥**[4]

साम्बपुराणे सुन्दरोपमया अहिंसाधृतीन्द्रियनिग्रहक्षमाशौचक्रोधाभावलज्जा-सत्यं चेत्येतैः पुष्पैः शिवार्चनायाः विधानं विद्यते–

**अहिंसा प्रथमं पुष्पं तथाचेन्द्रियनिग्रहः,**
**धृतिपुष्पं क्षमापुष्पं शौचपुष्पं पञ्चमम्।**
**अक्रोधः षष्ठपुष्पं तु ह्रीपुष्पं चैव सप्तमम्,**
**सत्यं चैवाष्टमं पुष्पमेभिः प्रीयते वै शिवः॥**[5]

**४.४ वैष्णवोपपुराणानि**– उपपुराणेषु विष्णोः माहात्म्यस्य भक्तेः अवताराणाञ्चोल्लेखो विद्यते। अस्य मुख्यतया विष्णुधर्मोत्तरपुराणम्, हरिवंशपुराणम्, नरसिंहपुराणञ्च एतानि त्रीण्युपपुराणानि प्रतिनिधिभूतानि सन्ति।[6] किन्तु सूक्ष्मदृष्ट्या तु वैष्णवोपपुराणवर्गे

---

१. उपपुराणदिग्दर्शन, पृष्ठः ३०३, पङ्क्तिः ३

२. महादेवी तथा तारा षोडशी भुवनेश्वरी।
भैरवी बगला छिन्ना महात्रिपुरसुन्दरी॥
धूमावती च मातङ्गी नृणां फलप्रदा।
आसु कुर्वम् परां भक्तिं मोक्षं प्राप्नोत्यसंशदम्॥ देवीपुराणम्, १८/२७-२८

३. उपपुराणदिग्दर्शन, पृष्ठः २३९, पङ्क्तिः ३

४. सौरपुराणम्, ४८/६०

५. साम्बपुराणम्, ८२/५-६

६. उपपुराणदिग्दर्शन, पृष्ठः ८१, पङ्क्तिः ३

एतानि सन्ति उपपुराणानि[१]-

| | | | | |
|---|---|---|---|---|
| मरीचि | नरसिंहम् | नारदीयम् | कल्किः | सनत्कुमारम् |
| वशिष्ठम् | विष्णुधर्मम् | आदिः | महानन्दम् | बृहन्नारदीयम् |
| दुर्वासा | औशनसम् | हरिवंशम् | वरुणम् | विष्णुधर्मोत्तरम् |

एतेषूपपुराणेषु न केवलं विष्णोः माहात्म्यं वर्तते अपितु एतेषु विष्णोः पूजनविधिरपि सम्यक्तया प्रतिपादितोऽस्ति। अत्र वर्णितमस्ति यत् विष्णुमन्दिरे स्वच्छता-कार्यकरणमपि पुण्यप्रदं भवति। तद्यथा विष्णुधर्मोत्तरपुराणे विष्णुमन्दिरस्य गोमयलेपनविषये चर्चा उपलभ्यते।[२] उपपुराणेषु विष्णोः माहात्म्यस्य ज्ञानं तु अनेन श्लोकेनैव स्पष्टतया भवति-

**धर्माश्च विष्णुः सकलानि विष्णुः, कर्माणि विष्णुश्च स एव भोक्ता।**
**कार्यञ्च विष्णुः करणानि विष्णुस्तस्मान्न किञ्चिद्व्यतिरिक्तमस्मिन्॥**[३]

**४.५ गाणपत्योपपुराणानि-** महापुराणेषु तु गणपतेः स्तुतीनां बाहुल्यमस्ति किन्तूपपुराणेषु न्यूनता वर्तते। तथापि विभिन्नेषूपपुराणेष्वपि गणपतेः महिमसूचिकाः स्तुतयः विद्यन्ते।[४] मुख्यरूपेण द्वे उपपुराणे मुद्गलोपपुराणं गणेशोपपुराणञ्च अस्मिन् वर्गे वर्तेते।[५] गाणपत्यवर्गे गणेशः एव मुख्यदेवता रूपेण अर्च्यते, तद्यथा-

**न गणेशात् परं ब्रह्म न गणेशात् परं तपः।**
**न गणेशात् परं कर्म ज्ञानं न गणपात्परम्॥**[६]

गणेशोपपुराणे गणपतिः तु ब्रह्मविद्याप्रदायकरूपेणास्ति-

**नमस्तस्मै गणेशाय ब्रह्मविद्या प्रदायिने।**
**यस्याऽगस्त्यायते नाम विघ्नसागरशोषणे॥**[७]

---

१. तत्रैव, पृष्ठः ३१, पङ्क्तिः १४
२. शीलतामल पानीयः स्वर्गलोकप्रदायकः। विष्णुधर्मोत्तरपुराणम्, १/११०/५
३. बृहन्नारदीयपुराणम्, १३/२०६
४. नमस्कृत्य महादेवं स्तोष्येऽहं तं विनायकम्।
महागणपतिं शूरमजितं ज्ञानवर्धनम्॥
एकदन्तं द्विदन्तं च चतुर्दन्तं चतुर्भुजम्।
तं नमामि गणाध्यक्षं भीममुग्रमुमासुतम्॥
मदमत्तं विरूपाक्षं भक्तविघ्ननिवारकम्। नरसिंहपुराणम्, २५/५-६,९
५. उपपुराणदिग्दर्शन, पृष्ठः ३२, पङ्क्तिः १७
६. मुद्गलपुराणम्, तृतीयखण्डः, ५१/४२
७. गणेशपुराणम्, उपासना खण्डः, १/१

**४.६ धर्मशास्त्रीयोपपुराणानि**- एतत्तु निश्चयेन वक्तुं शक्नुमः यत् धर्मशास्त्रीयतत्त्वानि तु पुराणोपपुराणानामेकमनिवार्यविशिष्टञ्च विषयवस्तु। उदाहरणार्थ स्त्रीधर्मसम्बद्धोपपुराणीय श्लोकः वर्तते यस्योपरि मनुस्मृत्याः स्पष्टप्रभावो दृश्यते[१], यथा-

**नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम्।**
**पतिं शुश्रूषते या तु सैव स्वर्गे महीयते॥[२]**

अत्र वर्णितमस्ति यत् स्त्रीणां किमपि पृथक् व्रतं नास्ति, पत्युः सेवा एव तां स्वर्गं नयति। सदाचारस्य प्रथमं निर्विवादञ्च तत्त्वं वर्तते पितरं मातरं प्रति श्रद्धा। पितुः महिम्नः वर्णनं यत्र तत्र उपलभ्यते[३] एव। किन्तु उपपुराणेषु मातुः स्थानं तु विशिष्टमस्ति उत्कृष्टञ्च वर्तते-

**पितुरप्यधिका माता गर्भधारणपोषणात्।**
**अतो हि त्रिषु लोकेषु नास्ति मातृसमो गुरुः॥**
**नास्ति गंगा समं तीर्थं नास्ति विष्णुसमः प्रभुः।**
**नास्ति शम्भुः समः पूज्यो नास्ति मातृसमो गुरूः॥[४]**
**तर्हि उपपुराणेषु धर्मशास्त्रीय-वर्णनं पर्याप्तं वर्तते।**

उपपुराणाणामेतस्य वर्गीकरणस्य सन्दर्भे श्लोकोऽयं महत्त्वपूर्णोऽस्ति, यस्य भावः वर्तते यत् यद्यपि एतानि सौरगाणपत्यादि- सर्वाण्युपपुराणानि मूलतः भगवत्प्राप्तेः साधनानि-

**सौराश्च शैवा गाणेशा वैष्णवा शक्तिपूजकाः।**
**मामेव प्राप्नुवन्तीह वर्षापः सागरं यथा॥[५]**

वस्तुतः अत्र भगवान् श्रीकृष्णः कथयति यत् सूर्यस्य शिवस्य गणेशस्य विष्णोः शक्तेश्च उपासकाः ममेव शरणमागच्छन्ति। अस्मिन्नेव विषये गीतायामपि श्रीकृष्ण स्वस्य सम्मतिं प्रकटयति यत्-

---

१. वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया॥ मनुस्मृतिः, २/६७
२. बृहद्धर्मपुराणम्, उत्तरखण्डः, ८/३
३. पिता धर्मः पिता स्वर्गः पिता हि परमं तपः।
पितरि प्रीतिमापन्ने प्रीयन्ते सर्वदेवताः॥ तत्रैव, २/१७
४. बृहद्धर्मपुराणम्, २/३३-३४
५. पद्मपुराणम्, उत्तरखण्डः, ९०/६३

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥**[1]

**५. अन्यविधविभाजनम्-** एवञ्च बहुभिः प्रकारैः पुराणानां विभाजनं भवितुं शक्नोति। सत्स्वपि पुराणेषु कोऽपि विषयः सर्वेषु वर्ण्येषु सर्वातिशायी वर्तते, तद्भवति तस्य महिमातिशयः। एतन्महत्त्वमङ्गीकृत्य पुराणान्यपि विभक्तानि। तद्यथा-

क) अलङ्कारशास्त्रदृष्ट्या प्रतिपादिताः विषयाः (गरुडनारदाग्निपुराणानि)
ख) तीर्थव्रतानां प्रामुख्यदृष्ट्या प्रतिपादिताः विषयाः (पद्मस्कन्दभविष्यपुराणानि)
ग) साम्प्रदायिकविषयाः (लिङ्गवामनमार्कण्डेयपुराणानि)
घ) इतिहासविषयाः (ब्रह्माण्ड-वायु-विष्णु-ब्रह्मवैवर्त-भागवत-गरुड-वराह-मत्स्य-कूर्मपुराणानि)

पौराणिकवाङ्मयस्य एतावतं बृहद्विभाजनं कर्तुं शक्यते। वस्तुतस्तु महापुराणादतिरिच्य उपपुराणादिकमनन्तज्ञानं पौराणिकवाङ्मये निहितमस्ति, यस्य ज्ञानं प्रत्येकभारतीयः प्राप्नुयादित्याशयः।

*****

१. श्रीमद्भगवद्गीता, १८/६६

 ISSN 2278-0416

# मानवचरित्रनिर्माणे यजुर्वेदस्य उपनिषदां योगदानम्

***मुकेशकुमारः पाण्डेय**

चरित्रनिर्माणे उपनिषदां महती भूमिका विद्यते। नास्त्यत्र कश्चन सन्देहः। कृत्स्नं विश्वमिदं विविधसमस्याभिः तत्राहतं भूत्वा भारतमेव पश्यतीति। सर्वे युवकाः प्रायः मार्गं विहाय कुमार्गं प्रति प्रचलिताः सन्तीति वीक्ष्य भारतीयसंस्कृतिं पश्यन्ति। अस्माकमुपनिषदस्तु सर्वेषां समाधानं कर्तुं सक्षमाः सन्ति। अस्माकम् ऋषयस्तु सर्वान् शिक्षितवन्त इत्यस्य प्रमाणं मनुस्मृतावपि द्रष्टुं शक्यते, यतोहि कथितम्-

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥**[1]

इत्यनेनावगम्यते यत् सर्वे मानवाः ब्राह्मणानां पार्श्वे समागत्य चरित्रस्य ज्ञानमवाप्तवन्तः। चरित्रशुद्ध्यर्थं भारतीयान् प्रति समागच्छन्ति स्म। भारतीयाश्चापि सर्वान् चरित्रशिक्षया प्रशिक्षितवन्तः। अस्य प्रमाणं कठोपनिषदि सर्वथा परिलक्ष्यते। श्रुतिरपि तत्राऽऽदिशति यत् सावधानेन भवितव्यमिति। यथाऽऽदिशति-

**उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत।**
**क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति॥**[2]

जागरितस्य जनस्य नैव कदापि विनाशो भवतीति। एतदर्थमत्र श्रुतिः करोत्यादेशमिति। अस्मिन्नेव श्लोके मानवस्य जीवनोपयोगिनः सिद्धान्ताः प्रतिपादिताः विद्यन्ते। यः कोऽप्यनुकरिष्यति तदा निश्चप्रचं कल्याणं स्यादिति। ईशोपनिषद् मानवाय ज्ञानं प्रयच्छति उपनिषदः वचनं सर्वथाऽनुकरणीयमेव

**ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥**[3]

---

*** शोधार्थी, संस्कृत-विभागः पंजाब-विश्वविद्यालयः, चण्डीगढम्।**

१. मनुस्मृति, २.२०, चौखम्बा संस्कृत प्रतिष्ठान ४३६०/४ अंसारी रोड, दरियागंज नई दिल्ली ११०००२

२. कठोपनिषद्, १.३.१४, गीताप्रेस, गोरखपुर, २००१।

३. शुक्ल-यजुर्वेद-माध्यन्दिन-संहिता, ४०.१, गीताप्रेस, गोरखपुर (गोविन्दभवन कार्यालय कोलकाता का संस्थान) २७३००५

संसारेऽस्मिन् यत् किञ्चिदपि दृश्यते तत् सर्वं परमात्मना प्रदत्तमस्ति। एतदर्थं त्यागपूर्वकमेवोपभोगः करणीय इति भावः। मा गृध इत्यनेनाऽदेशः कृतो विद्यते यत् धनमिदं कस्यापि नास्तीति भावः।

लोभः पापस्य कारणं भवति। एतदर्थमत्रोपनिषद् करोत्यादेशमिति। धनोपभोगः कथं करणीय इत्यत्रास्ति महोपदेशः। इदं न ममेति भावेन यः कुरुते कार्यं तस्य कल्याणं भवत्येव। एतदेवास्माकं राष्ट्रस्य चरित्रमिति सततं कार्यं कुर्यादिति। इत्यपि राष्ट्रस्य चिन्तनमेव, कार्यं कुर्वाणो मनुष्यः सदा शोभते। कर्माणि कुर्वन् मनुष्यः शतवर्षं यावज्जीवितुं समीहते।

यः कोऽपि मार्गेऽस्मिन् प्रचलति तदा न कर्म लिम्पति इत्यादेशं कुरुते तत्रोपनिषद्। यथोक्तम्-

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥**[२]

वस्तुतः कार्यशीलाः ये वर्तन्ते, ते एव यान्ति साफल्यमिति। एतदर्थमुक्तं यत् उद्यमेनैव सिध्यन्ति न मनोरथैः कार्यसिद्धिरिति तु विदितमेव लोके लोभपाशैर्नैव भवन्ति ग्रस्तास्तत्र धीराः। तेषां चित्तं हिमालय इव स्थिरं भवति ते एव जनाः लोकत्रयं विजयते इति। एतदर्थमुपनिषद् वचनामृतं पीतं न धीरास्तत्र मुह्यति। भर्तृहरिणाऽपि नीतिशतके विषयस्यास्योपरि कृतः प्रकाशस्तत्र कर्षन्ति भूरिविषयाश्च न लोभपाशैर्लोकत्रयं जयति कृत्स्नमिदं स धीरः। कर्माणि कृत्वैव जनः प्रातिष्ठ्यं लभते अद्यतनीयाः युवकाः कुमार्गं प्रति गच्छन्ति तेषां कृते तूपदेशतां गच्छति उपनिषदः वचनामृतम्। युवकानां चेतस्तु नैव स्थिरमस्ति। अभिभावकानां वचो नैव सहन्ते। सर्वदाऽऽत्महत्यायाः भयमुत्पादयन्ति। तेषां कृते उपनिषद् सन्मार्गं दर्शयति ये एतादृशं कुकृत्यं कुर्वन्ति तेषां गतिः नैवं भवति सम्यगिति निर्दिशति किलात्रोपनिषद्-

**असुर्या नाम ते लोका अन्धेन तमसाऽऽवृता।**
**तांस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः॥**[३]

भ्रमितयुवकानां कृते उपदेशोऽयं चरित्रस्य शिक्षां प्रति प्रेरयति। अस्माकम् ऋषयः इमं पाठं विश्वमपि पाठितवन्तः। अद्यत्वे पाश्चात्यसंस्कृतेः दुष्प्रभावत्वाद् बालाः भारतीयज्ञानं विस्मरन्त्यथ च कुकृत्यस्य नाटकमनुदिनं रचयन्ति। वैदिकवचनं

---

२. शुक्ल यजुर्वेद-माध्यन्दिन संहिता, ४०.२, गीताप्रेस, गोरखपुर (गोविन्दभवन कार्यालय कोलकाता का संस्थान) २७३००५

३. तदेव ४०.३

मनुर्भव इत्यस्य परित्यागं कुरुते। सदाचारस्य मार्गं विहाय कुपथगामिनो भवन्ति। आचारहीनं न पुनन्ति वेदाः इत्यपि स्मृतिवचनं विदितमेव। भारतीयानामाचरणं वीक्ष्य देवा अपि भारतस्य गीतं गायन्ति। यतोहि विष्णुपुराणे उल्लिखितम्-

**गायन्ति देवाः किलगीतकानि धन्यास्तु ते भारतभूमिभागे।**
**स्वर्गापवर्गास्पद हेतुभूते भवन्ति भूयः पुरुषाः सुरत्वात्॥**[१]

एतादृशः भूभागोऽस्माकं विद्यते। भुवि देशोऽयं भिन्न एव सर्वेषां मङ्गलं भूयात् इत्यपि भारतीयानामेव चरित्रं विद्यते। त्रिकर्म कृत् तरति जन्ममृत्यु इत्यपि चरित्रमस्माकमेव वर्तते। यज्ञो जपः दानञ्चैतानि त्रीणि कर्माणि सन्ति इत्यनेनैव मनुष्यः जन्ममृत्यु बन्धनात् विमुच्य मोक्षमेति। यस्य भारतस्य चरित्रमेतादृशं स्यात्तस्य स्थितिः कीदृशी वर्तते इत्यपि चिन्तनीयमेव। भारतीयास्तु शोकमपि कदापि न कुर्वते। अस्यापि निर्देशस्तत्रोपनिषदि विद्यत एव। अत्र भारते तु देवा अपि क्षीणे पुण्ये मर्त्यलोकं प्राप्नुवन्ति। क्षीणे पुण्यं मर्त्यलोके विशन्तीति श्रीमद्भगवद्गीतावचनं प्रमाणमेव। सदा कर्माणि रता एव मधु विन्दति। एतरेयोपनिषद् कथयति यत् चरन् वै मधु विन्दतीति। भावस्तु भारतीयचरित्रमेव तु वर्तते।

अतएव सत्सङ्गतिस्तु करणीयैव सर्वदा। यतो हि सत्सङ्गजानि निधनान्यपि तारयन्ति। अस्माकं राष्ट्रस्य चरित्रन्तु विश्वमपि शिक्षयति। अत्र तु सर्वथा ईर्ष्याया अभाव एवासीदिति। परस्परं सहयोगभाव एव भारतस्य गौरवं वर्धते। आचारः परमो धर्मः इत्यपि मनुस्मृतौ भगवता मनुना प्रोक्तमेव। अतएव ये आचारमार्गे गच्छन्ति, ते न कदापि विफलतां यान्तीति। उपनिषदः सन्देशोऽयं संसारस्य कृते महान् वर्तते यत् सर्वे प्राणिनस्तु ईश्वरस्यैव विविधरूपाणि सन्ति।

एतदर्थमहिंसा धर्ममेवानुगच्छेदिति। अहिंसा परमो धर्मः इत्युच्यते। यः कोऽपि सर्वाणि भूतान्यात्मनि पश्यत्यथ च सर्वभूतेषु तत्रात्मदर्शनं कुरुते, तदा न कदापि विजुगुप्सते। एतादृशी समदृष्टिर्यदा भवति तदा मनः सर्वान् प्रति विशुद्धिमेतीति भावः। इममेव भावमत्रोपनिषदि सारल्येन ऋषिस्तत्रोक्तवान्। अस्मिन्नेव मार्गे चलन्तस्तत्र मानवाः शोभन्ते। यथोक्तम्-

**यस्तु सर्वाणि भूतन्यात्मन्येवानुपश्यति।**
**सर्वभूतेषु चाऽऽत्मानं ततो न विजुगुप्सते॥**[१]

१. विष्णुपुराण-२/३/२४, तदेव

१. शुक्ल यजुर्वेद-माध्यन्दिन संहिता ४०.६ गीताप्रेस, गोरखपुर (गोविन्दभवन कार्यालय कोलकाता का संस्थान) २७३००५

यदा मानवस्तत्र सम्यग् तद्रूपं परंब्रह्म जानाति तदा तादृशः साधकः मोहशोकाभ्यां विनिर्मुक्तो। भूत्वा एकत्वरूपं ब्रह्म ज्ञात्वा शान्तिमेति। यतोहि उल्लिखितम् -

**यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥**[1]

वस्तुतस्तु ब्रह्मण एव सर्वे समुद्भूताः सन्ति। एतादृशं रहस्यं यदा कोऽपि जानाति तदा स्वत एव भेदबुद्धिर्भिद्यत इति। भेदबुद्धिनाशादेव समदृष्टिर्भवति। अस्यामवस्थायां न कोऽपि मोहो भवत्यथ च न शोकस्तिष्ठति। इममेव भावमत्र श्रीमद्भगवद्गीतायामपि कथयति श्रीकृष्णः अर्जुनं प्रत्यपि। यथोक्तम्-

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥**[2]

श्रीकृष्णोऽप्यत्रार्जुनमुपदिशति यत् यो मां पश्यति सर्वत्र सर्वं चापि मयि पश्यति, तादृशः न कदापि मत्तः भवत्यदृश्य इति भावः उपनिषदः भाव एवात्र गीतायां प्रकारान्तरेणोक्त इति। एतदर्थमेव गीतेति कथ्यतेऽत्रोपनिषदिति। यथोक्तं गीतायामत्र-

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति॥**[3]

उपनिषदः प्रभावाद्भवति समदृष्टिरिति। समदृष्टित्वादेवाहिंसाभावस्तत्रोत्पद्यते। येन हिंसाभावो प्रणश्यति। एतदेवास्ति राष्ट्रस्योत्तमं चरित्रमिति। अनेनैव काणेन भारतं भुवि भिन्नत्वेन राजते। श्रीकृष्णस्यापि घोषो वर्तते यद् अहं स्मरामि मद्भक्तं नयामि परमां गतिमिति। स्वयं श्रीकृष्णस्तत्र स्वभक्तं सर्वदा रक्षति। भक्तोऽपि परमं सौख्यमनुभवति। ईशोपनिषद् सन्मार्गे नेतुं सदा प्रयतते।

धनार्जनमपि न्यायमार्गेण करणीयम्। यतोहि अन्यायेनोपार्जितं द्रव्यं सर्वदा क्षणिकं भवति। एतदर्थं कथ्यते यद् अन्यायोपार्जितं द्रव्यं दशवर्षाणि तिष्ठति। सर्वमेतत् ज्ञानमुपनिषद एव विद्यते। यतोहि ईशोपनिषदि निगदितं यत् हे अग्ने! मां सुन्दरपथा नय सर्वदा धनार्जनायेति। यतोहि न्यायेनोपार्जितं सर्वविधं धनं बहुकालं यावत्तिष्ठति। अतएव निगदितमत्र-

**अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्।**

१. तदेव ४०.७
२. श्रीमद्भगवद्गीता ६.२९ गीताप्रेस, गोरखपुर (गोविन्दभवन कार्यालय कोलकाता का संस्थान) २७३००५
३. तदेव ६.३०

**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥**[१]

उपनिषदः नचिकेतानामको बालस्तु त्रिलोकेषु दुर्लभोऽस्ति। निजपितुः कल्याणायापि मृत्युमुखं प्राप्तः। तादृशो पुत्रस्तु सर्वदा वन्दनीय एव। यः कृत्स्नं धनं तृणमिव मन्यमानः परिहरति। कथयति च नेदं धनं सन्तोषप्रदमस्ति। धनेन तुष्टिः कदापि न भवति। यथाऽग्निः नैव घृतेन शान्तिमेति तथैवात्र धनस्यापि स्थितिरस्ति। नचिकेता नामको बालस्तत्र कालं कथयति यत् वित्तेन मनुष्यस्य न भवति तृप्तिरिति–

**न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा।**
**जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव॥**[२]

अत्र भौतिकपदार्थान् प्रति नैराश्यमो विद्यते। साम्प्रतिके युगे जनाः धनं प्रति भृशमाकर्षिताः वर्तन्ते। तस्मिन् समयेऽस्य धनं प्रत्यनासक्तभावस्तु सर्वथाऽनुकरणीय एव। भारतस्य स्वरूपमेतत् दुर्लभं भुवि विद्यते। वित्तं प्रति वैराग्यभावस्तु संसारस्य कृते अस्त्यादर्शरूपमिति। मनस्तस्य हिमालय इवाविचलितमासीत्। यस्याग्रे यमोऽपि नतः जात इति। यमेन तु बहुविधं भौतिकं प्रलोभनं प्रदत्तं किन्तु स दृढसंकल्पी बालस्तत्र नैव विचलितो जातः। तेन प्रेयसः परित्यागः कृतः। श्रेयस्तत्र स्वीकृतं तेन। ये भवन्ति धीरास्ते तु सर्वदा श्रेय एवाङ्गीकुर्वते। यथोक्तमस्ति–

**श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः।**
**श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते॥**[३]

नचिकेता नामकस्य बालस्य समक्षं सर्वं प्रलोभनीयं वस्तु यमेन प्रस्तुतम्। यमस्तत्र प्रस्तौति यत् हे बालक! ये ये कामा दुर्लभा मर्त्यलोके–

**सर्वान् कामांश्छन्दतः प्रार्थयस्व, इमा रामाः सरथाः सतूर्या,**
**न हीदृशा लम्भनीयाः मनुष्यैः॥**[४]

कालस्तत्र सर्वाणि प्रलोभनीयानि प्रस्तावितवान् तत्र संसारस्य सर्वविधं सौख्यं प्रस्तौति किन्तु सर्वं तेन दृढसंकल्पिनाऽस्वीकृतम्। कालस्तु कथयति यत् हे बालक नचिकेतो मरणं मानुप्राक्षीः। मृते सति आत्मनः किं भवतीत्यत्र मैवं पृच्छ। बालकस्तत्र

---

१. शुक्ल यजुर्वेद-माध्यन्दिन संहिता ४०.१८ गीताप्रेस, गोरखपुर (गोविन्दभवन कार्यालय कोलकाता का संस्थान) २७३००५
२. कठोपनिषद्, १.१.२७, गीताप्रेस, गोरखपुर, २००१
३. तदेव, २.१.२
४. कठोपनिषद्, १.१.२५, गीताप्रेस, गोरखपुर, २००१

निगदति यत् येन यादृशानाममृतानां सङ्गतिः प्राप्ता तस्मै किमपि नहि रोचते। हे यम! क्षणिकं भौतिकं सौख्यं न कामयेऽहम्। यथोक्तमत्र -

**अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते॥**[1]

दीर्घकालीनं जीवनमप्यत्र नेच्छति दृढसंकल्पी बालोऽयम्। नातिदीर्घे जीविते को रमेत इति कथयन् परित्यजति जीवनमपि। इत्यत्र प्रसङ्गं वीक्ष्यानुभूयते यत् कीदृशं चरित्रं महात्मन आसीदिति। उपनिषदः बालोऽयं विश्वस्यास्य कृते मार्गदर्शकरूपेण विराजते यस्य भौतिकसुखस्य प्राप्त्यर्थमत्र न जाने किं किं कुकृत्यं कुर्वते जनाः, तान्येव वस्तूनि परित्यजति महात्मा। एतादृशं बालकं स्वयमत्र यमः प्रशंसति। कथयति चात्र यमः हे बालक! जगतः सर्वस्वसौख्यं स्वर्ग्यमपि विहाय त्वामात्मतत्त्वमेव ज्ञातुं समीहसे। निश्चप्रचं दृढसंकल्पी वर्तसे त्वम्। त्वमेवात्मतत्त्वस्याधिकारी वर्तसे। धीराः सर्वदाः तत्त्वदर्शिनः भवन्ति। भौतिकं पदार्थं विहाय श्रेयसः मार्गे प्रचलितोऽसि इत्यनेन ज्ञायते यत् दृढसंकल्पी त्रिलोकमपि विजयते सदा।

सत्यस्य द्वारं समुद्घाटनार्थमत्रोपनिषदि प्रार्थना कृता वर्तते। कथितं तत्र यत् हे पूषन्। सत्यस्य द्वारं हिरण्यमयेन पात्रेणापिहितं वर्तते। तत्त्वं समुद्घाटय येनाहं द्रष्टुं पारयिष्यामीति। सत्यमेव धर्म इत्यस्ति। एतदर्थं सत्यधर्माय दृष्टये प्रार्थना क्रियतेऽत्रोपनिषदि। यथोलिखितम् -

**हिरणमयेन पात्रेण सत्यस्यापिहितं मुखम्।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये॥**[2]

मनुस्मृतौ मनुना सदाचारं स्थापनायोपदेशवचनं प्रतिपादितमत्र। कथितं यत् ये युवकाः प्रतिदिनं श्रेष्ठजनानां सेवां कुर्वते तेषां कल्याणं भवत्येव। आयुर्विद्यायशो बलं वर्धन्ते एव। एतदर्थमत्र मनुस्मृतौ प्रोक्तम्-

**अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।**
**चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम्॥**[3]

भर्तृहरिणाऽप्यत्रोक्तं यदनुपासितवृद्धानां विद्या नातिप्रसीदति। ये वृद्धोपसेविनः सन्ति तेषां विद्या विस्तारमेति अभिमानभावोऽपि विनश्यति। येन विद्या प्रसीदत्येव।

---

१. तदेव, १.१.२६

२. शुक्ल यजुर्वेद-माध्यन्दिन संहिता ४०.१५ गीताप्रेस, गोरखपुर (गोविन्दभवन कार्यालय कोलकाता का संस्थान) २७३००५

३. मनुस्मृति, २.१२१ चौखम्बा संस्कृत प्रतिष्ठान अंसारी रोड, दरियागंज, नई दिल्ली- ११०००२

अनेन विचारेण राष्ट्रस्योत्थानं भवत्येव। अद्यत्वेऽस्माकं समाजे वृद्धानां समादरभावस्याभावो दृश्यते। तेषां सेवा नैव भवति सम्यग्। एतदर्थमेव वृद्धास्तत्र वृद्धाश्रममाश्रमं कुर्वन्ति। अद्यत्वे पारिवारिकाभ्युदयाय मातृपितृगुरुशुश्रूषा, पितृनिर्देशपालनं मातृभक्तिः पतिपरि-चरणञ्चाप्यत्रापेक्ष्यन्ते। एतदर्थं निर्दिशत्यथर्ववेदस्य मन्त्रः-

**अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः।**
**जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम्॥**[1]

ये भवन्ति जागरूकास्तेषां न कदापि पराभवो भवतीति श्रुतिस्तत्र प्रमाणयति। तद्यथा-भूत्यै जागरणम् अभूत्यै स्वप्नम्। सदाचारणैव प्रचलत्यत्र सर्वविधोत्कर्ष इति। अध्यवसायशीलस्य न दैन्यं न पलायनं भवति। मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। इत्यनेन ध्वन्यते यत् भारतस्य जीवनप्रणाली पृथगेव वर्तते।

यथा सूर्यस्य दृष्टिः सर्वान् प्रति समानैव भवति तथैवात्र मन्त्रे संदेशो विद्यते यत् सर्वेषां व्यवहारः सर्वान् प्रति समान एव भवति। एषाऽस्ति वैदिकी पद्धतिरिति। अस्माकं संस्कृतिः संसारात् भिन्नैव वर्तते। अयज्ञो वा एषः। योऽपत्नीकः इत्युक्त्वा नारीं प्रति श्रद्धाऽर्पिता। कृत्स्नं वैदिकसाहित्यं सर्वथाऽस्त्वनुकरणीयमिति। यज्ञकार्ये नारीणां महत्त्वं सर्वाधिकं विद्यते। योऽपत्नीकोऽस्ति सः यज्ञस्याधिकारी न वर्तते। एतदर्थमेव यज्ञकाले रामायणे सीतायाः स्वर्णमूर्तिः स्थापितेति। एतादृशं सर्वं संसारस्य कृते अस्त्यादर्शः। सत्यमेव जयत्यत्र भारतस्य भूमौ। सत्यमेव ब्रह्मेति। बृहदारण्योपनिषदि व्याकृतं विद्यते यत् सत्यं ब्रह्मेति, सत्यं ह्येव ब्रह्म। तथैव छान्दोग्योपनिषदि तथैव दृश्यते यत् सत्यं त्वेन विजिज्ञासितव्यम्। उपनिषदि चरित्रनिर्माणस्य कोटिशः निदर्शनानि वर्तन्ते। छात्राणां कृते बहवो तत्रोपदेशाः दृश्यन्ते। सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः इत्यत्र चरित्रशिक्षामथ सदाचारं पाठयति। सत्ये धर्मस्तिष्ठति। धर्मस्याऽधारभूतं सत्यमेवास्ति। युवकानां कृते महानुपदेशोऽयं विद्यते यत् न कदापि स्वाध्यायमार्गः त्यक्तव्य इति। आचार्यः शिष्यं दीक्षान्तावसरे शिक्षयति। कथयति च न कदापि जीवने स्वाध्यायं त्यजेत्। स्वाध्यायबलेनैव कृत्स्नं शास्त्रं स्मरणं भवति। माता तु देवतुल्या पिताऽपि तथैव स्मर्यत इति। आचार्यमपि देववदेव स्मरेत्। यतोहि आचारं ग्राहयतीत्याचार्यः लोके निगद्यते। एतदर्थमाचार्यः सदा पूज्यते भुवि। अतएवोपनिषदि सर्वं निर्दिष्टं मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव। अतिथिदेवो भव उपनिषद् शिक्षयत्यस्माकं जगति

१. अथर्ववेद, ३.३०.२ गीताप्रेस, गोरखपुर (गोविन्दभवन कार्यालय कोलकाता का संस्थान) २७३००५ सं. २०७२।

यत् दानमपि कथं देयमिति। दानसमये कुत्रापि न प्रकाशयेत्। श्रद्धाभावेन दानं दातव्यमिति। एतदर्थमत्रोपनिषद् कथयति यत् दानसमये लज्जाभावेनाथ च भयं मत्वा करणीयं खलु।

उपनिषदि मानवजीवनस्य सम्यग् सञ्चालनाय बहूनि तत्त्वानि निहितानि सन्ति। शिक्षान्ते समाजे कथं व्यवहरेदित्यपि तत्र विद्यते। यदि जीवने कुत्रापि विचिकित्सा भवेच्चेत्तर्हि ब्राह्मणाः समदर्शिनः यथा कुर्वन्ति तथैव तत्र करणीयमिति। जीवनस्य मूलमन्त्रस्तत्र प्रोक्त इति । यथोक्तमत्र यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः। उपनिषदः वचनामृतमत्र छात्राणां कृते महदौषधमस्ति। अद्यत्वे नवयुवकास्तत्र भारतीयसमाजे विचारमूढाः भूत्वा विचरन्ति महीतले। तेषां समक्षं कोऽपि मार्गो नैव दृश्यते। अस्मिन् कलिकाले तैत्तिरीयोपनिषद् सनमार्गं प्रति नयतीति भावः। उपनिषद् चरित्रनिर्मात्री विद्यते। मार्गे चलन्तस्तु सर्वे सौख्यमनुभवन्ति। एतदर्थमेवात्र शिष्यान् सन्मार्गं दर्शयन् कथयति यत् एष आदेशः एषः उपदेशः। एषा वेदोपनिषद्।। उपनिषद्वचनं सदोपकारिणी भवत्येव उपनिषदस्तु लोकव्यवहारादारभ्य परलोकज्ञानमपि शिक्षयन्ति। उपनिषत्सु विश्वस्य सम्पूर्णं ज्ञानं निहितं वर्तते। अतएवोपनिषदां विषये जर्मन दार्शनिकः शॉपनहारमहादयोऽवदत् यद् जीवनस्योत्थानायोपनिषद्ग्रन्थाः श्रेष्ठतमाः विद्यन्ते। जीवनेऽपि उपनिषदः सौख्यं शान्तिं च ददत्यथ च मरणोपरान्तेऽपि शान्तिं प्रदास्यन्तीति।

यद्यपि इमे लैटिनानुवादं पठित्वैव विलिखितवन्तः मूलोपनिषदः भागं नैवावलोकितवन्तः किल। भौतिकज्ञानेन साकमाध्यात्मिकोत्थानायोपनिषद् कुरुते महत्कार्यमिति। उपनिषत्सु आत्मज्ञानं ब्रह्मप्राप्तिर्वा परमकर्त्तव्यत्वेन निर्दिश्यते।

**आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः॥**[१]

उपनिषद्यस्यां भारतीयानां नारीणां गौरवमयं रूपं दृश्यते। गार्गी भारतीयनार्याः प्रतिनिधित्वं कुरुते। मैत्रेयी तत्रैवोपनिषदि ब्रह्मवादिनी रूपेति। याज्ञवल्क्यस्य न केवलं भार्या साऽऽसीदपितु ब्रह्मज्ञाने विशिष्टनारी चाप्यासीदिति। बृहदारण्यकोपनिषदः ते त्वलङ्कारभूते खल्वास्तामिति। याज्ञवल्क्यस्य भार्या मैत्रेयी तु समस्तं धनमस्वीकृत्य ब्रह्मज्ञानं स्वीकृतवती। तस्याः वैदुष्यं चमत्करोति संसारम्। मैत्रेयी गार्गी च नारीणां गौरवं समुज्ज्वलं कुरुतः। शास्त्रार्थपद्धतिस्तु मिथिलायां विशेषरूपेण प्रथितैव। याज्ञवल्क्येन सह गार्गी शास्त्रार्थं करोतिस्मविश्वेऽस्मिन् गार्गी मैत्रेयी च प्रथिते जाते। अस्माकं कृते राष्ट्रस्य गौरवरूपे स्तः। बृहदारण्यकोपनिषदः निर्माणे मैत्रेयी मुख्यत्वेन गण्यते।

१. बृहदारण्यकोपनिषद्, ५.५.१५ गीताप्रेस, गोरखपुर, २००१।

इत्यनेनावगम्यते यत् तस्मिन् कालेऽपि नारीणां शिक्षा सर्वोत्तमेत्याऽसीदिति। यत्र दर्शनस्य स्थानं तुंगशृङ्गेऽवलोक्यतेस्म। आत्मा वा अरे द्रष्टव्य इत्यपि प्रथितमेव लोके। अस्माकं देशस्य नार्यस्त्वत्र चरित्रवत्यः आसन्। तासां चरित्रमद्य संसारस्य कृते तूदाहरणमस्ति। एतत्सर्वमिदमादर्शस्वरूपमेव। सोऽयमात्मा बलहीनेन लभ्यो नास्ति। महता परिश्रमेण तपसा वा प्राप्यतेऽत्र। तदर्थमेवोपनिषदि निगदितं यदात्मा बलहीनेन प्राप्यो नास्ति। यथोक्तमत्र –

**नायमात्मा बलहीनेन लभ्यो नायमात्मा प्रवचनेन लभ्यः।**

उपर्युक्तं सन्दर्भं वीक्ष्यानुभूयते यत् मनसा वाचा कर्मणा ये सन्ति जितेन्द्रियास्ते समक्षाः सन्ति सर्वत्रापि। अतएवोपनिषद् वचनमनुकरणीयमिति। युवकानां चरित्रनिर्माणायोपनिषदः वचनानि सर्वथाऽनुकरणीयान्येव युवकानां कृते योगोऽपि अपेक्ष्यते एव। योगेन मनांसि शुद्धानि भवन्ति। येन बालकाः पूर्णतः स्वस्थाः भवितुं शक्नुवन्ति। एतदर्थमत्रोपनिषदि योगोऽपि वर्णित यथा–

**लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवं च।**
**गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति॥**[१]

उपर्युक्तं सन्दर्भं वीक्ष्य भवति सम्यग् ज्ञानमत्र यद् योगेन विषयासक्तिरपि क्षीयते। येन भवत्यभ्युदयोऽपि। योगमार्गेण मनस्तेषां बालकानां सन्मार्गं प्रति याति। वर्णमपि योगः प्रसादयति। चेतो भवति प्रसन्नमिति। अनेन बालकाः दृढसंकल्पिनो भवन्ति। इत्यनेन क्षुद्रविचाराः स्वत एव पलायन्ते। सद्भावास्तत्र समागच्छन्ति। यथा नचिकेता नामको बालकः यमस्य समक्षमेव सर्वविधं सौख्यं स्वीकृतवान्। यदा यमेनोक्तं यत् हे नचिकेतः! त्वामहं कामभाजं करोमिति। कथनसमकालमेव बालस्तत्र नेत्युक्तवान्। एतादृशं सच्चरित्रस्य ज्ञानं प्रददाति उपनिषदिति। चिरजीविकामपि नैवाङ्गी कृतवान् यथोक्तमत्र –

**एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च।**
**महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि॥**[२]

युवकानां कृते महान् सन्देशोऽयं वर्तते। उपनिषदामेकैकाक्षरं महापातकनाशकमथ च सन्मार्गदायकमपि। उपनिषदः वचनानि परमौषधरूपाणि विद्यन्ते। कृत्स्नं शास्त्रं सन्मार्गं प्रति नयति। स्कन्दपुराणमपि सयमं प्रति सम्प्रेरयत्येवा सन्तोषमपि तीर्थमिव मनुते। एतदर्थं युवकानां चरित्रनिर्माणार्थं स्कन्दपुराणस्य वचनं सर्वथाऽनुकरणीयमस्ति। अस्मिन् मार्गे गच्छन्तः युवकाः चरित्रवन्तो भवन्त्येव। यथोक्तं स्कन्दपुराणस्य काशीखण्डे–

१. श्वेताश्वरोपनिषद्, २.१३ विजयकृष्ण लखनपाल–७७ ए, ग्रेटर कैलाश –१, नई दिल्ली–४८
२. कठोपनिषद्, १.१.२४ गीताप्रेस, गोरखपुर, २००१ ।

**दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते।**
**ब्रह्मचर्यं परं तीर्थं तीर्थं च प्रियवादिता॥**[१]

तत्रैवोक्तं यत् यदि नैव शुद्धं मनः कस्यचिद् तदा तु न किमपि तीर्थं पवित्रयितुं शक्नोति। चरित्रनिर्माणाय सर्वमेतद् भवत्यावश्यकमिति भावः। मनो भवति यदि निर्मलं तदा तु तपसः नास्त्यावश्यकतेति। सर्वाणि तीर्थान्यपि व्यर्थतां यान्ति, मनसः शुद्धिं विना।
यथोक्तं स्कन्दपुराणे –

**दानमिज्या तपः शौचं तीर्थसेवाश्रुतं तथा।**
**सर्वाण्येतान्यतीर्थानि यदि भावो न निर्मलः॥**[२]

उपर्युक्तानि पुराणवचनानि बालकान् सन्मार्गं प्रति नयन्ति। सर्वाणि पुराणान्यपि वेदोपनिषदः एवानुकुर्वन्ति। परमात्मनः प्राप्तिरपि निर्मलमनसैव सम्भवति। तत्र चक्षुषा, न वाचा वाऽपि प्राप्तुं शक्यते इति। एतदर्थमत्र मुण्डकोपनिषदि महता कण्ठेनोक्तं खलु। यतोहि कथितम्–

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा।**
**ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः॥**[३]

उपर्युक्तं मन्त्रं वीक्ष्यानुभूयते यत् ज्ञानस्यैव निर्मलत्वेन सर्वं प्राप्यते इति। एतदर्थं मनसा वाचा कर्मणा विशुद्धत्वेन भवितव्यम्। अयमेव सद्गतेः पन्थाः। अस्यामेव पद्धतौ चलन्तः मानवाः सौख्यमधिगच्छन्ति। नान्यः पन्थाः विद्यतेऽयनाय इत्यपि वैदिकवचनं सार्थक्यमेति। उपनिषदः कथा जीवनस्य पद्धतिमेव परिवर्तयति। वचनानि उपनिषदः मानसिकरोगमपहाय स्वास्थ्यं ददति। सर्वप्रकार- कमवषादमपाकुर्वन्ति। एतदेवास्ति वैशिष्ट्यमुपनिषदामिति भावः। तैत्तिरीयोपनिषदः भृगुवल्ल्यां वरुणपुत्र-भृगोः प्रसङ्गस्तु सर्वथा युवकानां कृतेऽस्ति परमोपकारक इति। पितुरादेशमधिगम्य भृगुः ऋषिपदं प्राप्त- स्तत्र संसारे प्रथितोऽपि जातः इति। प्रसङ्गमिमं वीक्ष्यावगम्यते यत् दृढसंकल्पत्वात्तु साधारणमानवोऽपि ऋषिपदं प्राप्नोति। अतएवोपनिषदः कथा श्रवणीया विद्यते। ब्रह्मचर्येण युवकाः परमं पदं प्राप्तुं सन्ति समर्थाः। यथा ऋषिः भृगुस्तत्र प्रातिष्ठ्यमधिगतवान्। पितुः पार्श्वे गत्वा ब्रह्मज्ञानाय निवेदितवान्। भृगुऋषेः जीवनेन परिश्रमस्य शिक्षा प्राप्यते। परिश्रमेण मनुष्यः असम्भवमपि कार्यं सम्भवं कुरुते।

*****

१. स्कन्दपुराण (काशीखण्ड), ६.३१ सुरभारती प्रकाशन, नई सड़क दिल्ली-६ ।
२. स्कन्दपुराण (काशीखण्ड), ६.३९ सुरभारती प्रकाशन, नई सड़क दिल्ली-६ ।
३. मुण्डकोपनिषद्, ३.१.८ ईशादिनौपनिषद् शाङ्करभाष्यसहित गीताप्रेस, गोरखपुर, २००१ ।

 ISSN 2278-0416

# बौद्धन्यायानुसारं स्वभावप्रतिबन्धत्वम्

***डॉ. देवी सिंहः**

वैशिष्ट्यमस्ति भारतीयदार्शनिकविचारधारासु बौद्धदर्शनस्य। आचार्यदिङ्नागो बौद्धदर्शने बौद्धन्यायस्य जनकोऽस्ति। तस्य प्रमाणसमुच्चोपरि आचार्यधर्मकीर्त्या प्रमाणवार्तिकनामकग्रन्थस्य रचना कृता। बौद्धदर्शनं प्रमाणद्वयं स्वीकरोति-प्रत्यक्षमनु-मानञ्चेति। यज्ज्ञानं कल्पनारहितं भ्रान्तिशून्यं च भवति तज्ज्ञानं प्रत्यक्षमस्ति।[1] लिङ्गग्रहणस्य प्रतिबन्धस्मरणस्य चानन्तरं यज्ज्ञानं भवति तज्ज्ञानं अनुमानमस्ति। पक्षधर्मस्य ग्रहणे तथा च साध्य-साधनयोः सम्बन्धस्य स्मरणे अनुमान-प्रमाणस्य प्रवृत्तिर्भवति। अतः एतत्पश्चात्कालभाविज्ञानं कथ्यते।[2] **अनुमानं द्विविधं-स्वार्थानुमानं परार्थानुमानञ्च।**[3] येन ज्ञानेन स्वस्य कृते ज्ञानं भवति, तज्ज्ञानं स्वार्थानुमानम्। येन ज्ञानेन परस्य कृते ज्ञानं भवति तज्ज्ञानं परार्थानुमानमस्ति।[4] 'लिङ्गम्' इत्यस्यशब्दस्यार्थमस्ति-'लिङ्ग्यते गम्यतेऽनेनार्थ इति लिङ्गम्'[5] यथा- धूमं दृष्ट्वा परोक्षाग्नेः अनुमानं भवति। अतः धूमः एव अग्नेः लिङ्गं भवति। हेतोः त्रीणि रूपाणि सन्ति[6]- **१. लिङ्गस्यानुमेये सत्वमेवनिश्चितम्, २. सपक्षे एव सत्त्वं निश्चितम् ३.असपक्षे चासत्वमेव निश्चितम्।** यथा- पर्वते वह्निरस्ति, धूमत्वात् पाकशालावत्। अत्र धूमः

---

* सहायकाचार्यः ( संस्कृतम् ), गोस्वामिगणेशदत्तसनातनधर्ममहाविद्यालयः, चण्डीगढम्।
Email- adevisinghrana76@gmail.com , Mo. ८७२७०८३०३०

१. 'तत्र प्रत्यक्षं कल्पनापोढमभ्रान्तम्'। धर्मकीर्तिः न्यायबिन्दुः, १.४

२. लिङ्गग्रहणसम्बन्धस्मरणस्य पश्चाद् मानम् अनुमानम्। गृहीतपक्षधर्मे स्मृते च साध्यसाधनसम्ब-न्धेऽनुमानं प्रवर्तते इति पश्चात्कालभावि उच्यते। धर्मोत्तरः, न्यायबिन्दुटीका, पृ. ३०

३. स्वार्थं परार्थं च। धर्मकीर्तिः, न्यायबिन्दुटीका, २.२

४. स्वस्मायिदं स्वार्थं परस्मायिदं परार्थम्। श्रीनिवासशास्त्री, तदेव, पृ. ९८

५. तदेव, पृ. ९८

६. त्रैरूप्यं पुनर्लिङ्गस्यानुमेये सत्त्वम् एव, सपक्षे एव सत्त्वम्, असपक्षे चासत्त्वमेव निश्चितम्। तदेव, २.५

एव वह्नेः लिङ्गमस्ति। सः पर्वतरूपपक्षेऽस्ति, पाकशालारूपसपक्षेऽपि अस्ति, परं जलाशयरूप विपक्षे कदापि न भवति। अतः अयं सद्हेतुरस्ति। अत्र अग्निः साध्योऽस्ति धूमश्च तस्याः सिद्धौ साधनमस्ति। अतः अग्निधूमौ साध्यसाधनमपि कथ्यते। यतो हि यत्र धूमस्तत्र वह्निरियं व्याप्तिर्भवति।

हेतुबिन्दुटीकाकारार्चटमहोदयेन कथितं यत् व्यापकत्वादेव व्याप्यस्यास्तित्वमस्ति अथवा अव्यापकत्वाद् व्याप्यस्यास्तित्वं न। अत्र व्यापक-व्याप्ययोः धर्मं व्याप्तिः कथ्यते।[1]

आचार्यदिङ्नागेन कथितं **'ग्राह्यधर्मस्तदंशेन व्याप्तो हेतुः'।**[2] धर्मकीर्तिना कथितम्-

**पक्षधर्मस्तदंशेन व्याप्तो हेतुः त्रिधैव सः।**
**अविनाभावनियमाद् हेत्वाभासास्ततोऽपरे॥**[3]

आचार्य मनोरथनन्दिना कथितम्- 'तदंशेन पक्षस्यधर्मेण सिसाधयिसितेन व्याप्तो हेतुर्बोद्धव्यः'।

**स्वभावप्रतिबन्धः**- स्वस्य भावः इति स्वभावः अर्थात् स्वसत्ता (स्वोत्पत्तिः) निजस्वरूपम्। प्रतिबन्धः (आयत्तः) आश्रितः अर्थात् यत् वस्तु निजसत्तायै परवस्तुनि आश्रितमस्ति तत् वस्तु स्वभाव-प्रतिबद्धं कथ्यते तथा च तयोः सम्बन्धः स्वभावप्रति-बन्धः (अविनाभावसम्बन्धः) भवति। उदाहरणतः धूमः स्वसत्तायै अग्नौ आश्रितोऽस्ति अग्निं विना धूमस्य सत्ता न भवति। अतः धूमस्य अग्न्या सह स्वभावप्रतिबन्धः वर्तते। एवं प्रकारेण शिंशपात्वं स्वसत्तायै वृक्षत्वे आश्रितमस्ति, यतो हि वृक्षत्वं विना शिंशपात्वं न भवति। अतः शिंशपात्वस्य वृक्षत्वेन सह स्वभावप्रतिबन्धः अस्ति।[4] बौद्धन्याये स्वभावप्रतिबन्धस्य कृते 'नान्तरीयः' शब्दोऽपि वर्तते। नान्तरीयकः त (अन्तरम्) व्यवधानम्, न तथा नान्तरम्, नान्तरे भव इति गहादित्वात् छः (नान्तरीयः) ततः स्वार्थिकः कन् इति नान्तरीयकः।[5] यः यं विना न भवति इति नान्तरीयकः

१. (क) तस्य पक्षधर्मस्य स तु व्याप्तिः - यो व्याप्नोति यश्च व्याप्यते तदुभयधर्मतया प्रतीतेः।
हेतुबिन्दुटीका, पृ. १७-१८
(ख) न्यायवार्तिकतत्त्वार्थटीका, १.१.५
२. आचार्यदिङ्नागः, प्रमाणसमुच्चयः, अनुमानप्रमाणम्-२
३. (क) आचार्यः धर्मकीर्तिः, प्रमाणवार्तिकम्, ३.१
(ख) आचार्यः धर्मकीर्तिः, हेतुबिन्दुः, पृ. ५१
४. श्रीनिवासशास्त्री, न्यायबिन्दुटीका, पृ. १३०
५. धर्मोत्तरप्रदीपः, पृ. ९२

अविनाभावी वा अस्ति। लिङ्गं हेतुः वा स्वसाध्यस्य अविनाभावी भवति। अविनाभाव-सम्बन्धः अर्थात् प्रतिबन्धः एव बौद्धन्याये व्याप्तेः स्वरूपमस्ति। यतो हि यावत् अग्निधूमयोः नियतसम्बन्धस्य (अविनाभाविसम्बन्धस्य) निश्चयं न भवति तावत् ज्ञात-धूमेन अपि अग्नेः अनुमानं न भवति। वस्तुतः यस्मिन् लिङ्गे कस्यापि परोक्षार्थस्याविनाभावस्य निश्चयं भवति तदेव परोक्षार्थस्य ज्ञापकं भवति। एवं प्रकारेणैव लिङ्गं परोक्षार्थस्य (साध्यस्य) निश्चायकं (गमकं) कथ्यते।

स्वभावः, कार्यम् अनुपलब्धिश्च एतेषु त्रीषु हेतुषु एव साध्येन सह अविनाभावस्य नियमो भवति। अतः एते एव साध्यस्य साधनं भवितुं शक्यन्ते।

पूर्वपक्षोऽत्र शंकां करोति यत् स्वभावप्रतिबन्धत्वादेव साध्यसाधनभावः कथं भवति? अनेन विना कथं न भवति? शंकांः समाधातुं कथितम् - **'तदप्रतिबद्धस्य तदव्यभिचारनियमाभावात्'**[1] अर्थात् तेन स्वभावेन यस्य प्रतिबन्धो नास्ति, तस्य अन्यवस्तुना सह अविनाभावस्य नियमः (अव्यभिचारस्य नियमः) न भवति। भावार्थोऽयमस्ति यत् अविनाभावनियमादेव द्वयोर्वस्तुनोः साध्यसाधनभावो भवति। यतो हि धूमरूपलिङ्गं प्रदीपवत् योग्यतामात्रेणैव परोक्षार्थस्य ज्ञानस्य निमित्तं नास्ति अपितु अविनाभावनियमेन निश्चितलिङ्गमेव परोक्षर्थस्य ज्ञापकं भवति। अतः स्वभावप्रतिबन्ध त्वादेव अविनाभावनियमो भवति।

शंका - यदि पराश्रितस्य तस्मिन् अर्थे प्रतिबन्धो भवति यः पराश्रितो न, तर्हि अत्र साध्यसाधनयोर्कस्य कस्मिन् प्रतिबन्धो भवति?

समाधानम् - **'स च प्रतिबन्धः साध्याऽर्थे लिङ्गस्य'**[2] अर्थात् सः स्वभावप्रतिबन्धो लिङ्गस्य (धूमादेः) साध्यार्थे (अग्न्यादौ) भवति। पराश्रितत्वात् लिङ्गं प्रतिबद्धमस्ति (आश्रितं व्याप्यं वा)। साध्यश्च अपराश्रितत्वात् प्रतिबन्धस्य विषयोऽस्ति, न प्रतिबद्धः। भावार्थोऽयमस्ति यत् साध्यसाधनयोः समरूपेण तादात्म्यत्वादपि यत् प्रतिबद्धमस्ति तत् साधनं यस्मिंश्च प्रतिबन्धो भवति सः साध्योऽस्ति। यतो हि यस्य धर्मस्य स्वसत्ता यस्मिन् धर्मे आश्रिता अस्ति, स धर्मः तस्मिन् धर्म एव प्रतिबद्धो भवति, यथा- **'प्रयत्नानन्तरीयकत्वाख्योऽनित्यत्वे'**[3] अर्थात् प्रयत्नानन्तरीकत्व-धर्मोऽनित्यत्वे प्रतिबद्धोऽस्ति वस्तुतः साध्यसाधनभावो नियताधारे भवति, यतो हि

---

१. आचार्यः धर्मकीर्तिः, न्यायबिन्दु, २.२०

२. तदेव, २.२१

३. श्रीनिवासशास्त्री, न्यायबिन्दुटीका, पृ. १३३

प्रत्यत्नानन्तरीयवस्तुर-नित्यस्वभावयुक्तमेवास्ति, एतद् निश्चितम्। अतः साध्यसाधनभावो नियतविषये एव भवति, नान्यथा इति।

पूर्वपक्षः - साधनस्यैव (लिङ्गस्यैव) अविनाभाव-सम्बन्धः (स्वभाव-प्रतिबन्धः) कथं भवति? वस्तुनः कथं न?

उत्तरपक्षः- यतो हि लिङ्गस्य साध्येन सह एव तादात्म्य-तदुत्पत्तिर्भवति।[1] आचार्य धर्मकीर्तिः कथयति यत् तादात्म्य-तदुत्पत्तिरेताभ्यां द्वाभ्यां निमिताभ्यामेव स्वभावप्रतिबन्धो भवति। यथा- असौ वृक्षोऽपि अस्ति तथा च अशोकोऽपि, परमेतेषु सर्वेषु धर्मेषु तादात्म्यं भवति। वस्तुतः ते अभिन्नाः भवन्ति। तेषु एको धर्मः प्रतिबद्धः (अविनाभावः) भवति, अपरः प्रतिबन्धस्य विषयो भवति। यथा- अशोकत्वधर्मो वृक्षत्वस्याविनाभावी अस्ति, यतो हि सोऽशोकः तदैव भवितुमर्हति यदा स वृक्षो भवेत्। अतः तादात्म्यात् प्रतिबन्धो भवति। परं कार्य-कारणभावदृष्ट्या कार्यं स्वसत्तायै कारणाश्रितमस्ति। तत् कार्यं स्वकारणे प्रतिबद्धमस्ति (अविनाभावी अस्ति), यथा - अङ्कुररूपकार्यं सदैव बीजादेव उत्पन्नं भवति, बीजं विना न। एवं प्रकारेण तदुत्पत्त्या अपि प्रतिबन्धः भवति। यतो हि अङ्कुरो बीजादेवोत्पन्नो भवति। अतः अंकुरं दृष्ट्वा बीजस्यानुमानं कर्तुं शक्यते।[2] तादात्म्य-तदुत्पत्तेः सिद्धान्तो ध र्मकीर्तेर्नूतनोद्भाव- नास्ति बौद्धदर्शने।[3]

शंका - पूर्वपक्षः पुनराक्षेपते यत् एताभ्यां द्वाभ्यां निमित्ताभ्याम् (तादात्म्य-तदुत्पत्तिभ्याम्) एव स्वभावप्रतिबन्धः (अविनाभावप्रतिबन्धः) कथं भवति? अन्यैर्निमित्तैः कथं न? यतो हि अनेकाः दृष्टान्तास्सन्ति यत् यत्र व्याप्तिस्तु भवति परं तादात्म्य-तदुत्पत्तोः कोऽपि निमित्तं न भवति। यथा-चन्द्रोदयं दृष्ट्वा समुद्रस्य वृद्धेर्कुसुमविकासस्य चानुमीयते तथा च शरदृतौ निर्मलजलं दृष्ट्वा अगस्तनक्षत्रोदयस्या- नुमीयते। एवं प्रकारेण अनेका दृष्टान्ताः लोके शास्त्रे च विद्यन्ते। अतः नियतसाहचर्येणैव व्याप्तिरुचितास्ति, केवलं तादात्म्य-तदुत्पत्तिभ्यां न[4]?

समाधानम् - पूर्वपक्षस्याक्षेपं निवारयितुं बौद्धनैयायिकाः कथयन्ति यत् सः साध्य एव स्वभावो नास्ति, यस्य च लिङ्गस्य तस्मात् साध्यात् एवोत्पत्तिर्नास्ति, तस्य लिङ्गस्य तस्मिन् साध्ये स्वभाव-प्रतिबन्धो (अविनाभावसम्बन्धो) न भवति।[5] यतो

---

१. वस्तुतस्तादात्म्यात् तदुत्पत्तेश्च', आचार्यः धर्मकीर्तिः, न्यायबिन्दुः, २.२२

२. श्चेरबात्स्की, बुद्धिस्ट लॉजिक २, पृ. ७३

३. S.N. Dass Gupta, History of Indian Logic, page no. 35.

४. न्यायबिन्दुटीका, पृ. १३७

५. अतत्स्वभावस्यातदुत्पत्तेश्च तत्राप्रतिबद्धस्वाभावत्वात्', तदेव, २.२३

हि एतदवश्यमेव मन्तव्यं यत् तादात्म्य-तदुत्पत्तिभ्यामेवाविनाभावसम्बन्धो (स्वभावप्रतिबन्धो) भवति, अन्यथा कोऽपि पदार्थः कस्यापि साधकं (लिङ्गं) भविष्यति। पूर्वपक्षेणप्रदत्तदृष्टान्ते अपि तादात्म्य-तदुत्पत्तिसिद्धान्तः स्थितोऽस्ति। यथा- जलस्य निर्मलता अगस्तोदयस्यैव कार्यमस्ति। यद्यपि समुद्रवृद्धिर्कुमुदविकासो वा चन्द्रोदयस्य साक्षात्कार्यं नास्ति तथापि तयोरुत्पत्तिरेकसामग्रयाश्रिताऽस्ति। एकस्मात् महाभूतविशेषादेव तयोरुत्पत्तिर्भवति। अतः अत्रापि परम्परया तदुत्पत्तिर्निमित्ताऽस्ति एव। यत्र एतयोर्निमित्तयोको:ऽपि न भवति तत्राविनाभावसम्बन्ध एव न भवति। यथा- जलयुक्तमेघान् दृष्ट्वा वृष्टेरनुमानं युक्तिसंगतं नास्ति, यतो हि एतदपि भवितुं शक्यते यत् कस्यापि कारणेन वृष्टिरेव न भवेत्। वस्तुतः कारणेन कार्यस्यानुमानं न कर्तुं शक्यते।[1]

पूर्वपक्ष- यदि तादात्म्यतदुत्पत्तिभ्यामेवाविनाभावसम्बन्धो (स्वभावप्रतिबन्धो) भवति तर्हि कार्यहेतुः स्वभावहेतुश्च एतौ एव परोक्षार्थस्य बोधकौ कथं भवतः?

उत्तरपक्षः - यतो हि तादात्म्यं तुदत्पत्तिश्च एतौ द्वौ निमित्तौ स्वभावकार्यहेत्वोरेव नियतरूपे भवतः। साध्यवस्तुना सह एकरूपता तादात्म्यं तस्मादुत्पत्तिरिति तदुत्पत्तिः। तयोः (तादात्म्य-तदुत्पत्योः) निमित्तेन एव साध्यसाधनभावो भवति। अतः कार्यस्वभावहेतुभ्यामेव भावात्मकवस्तुनस्सिद्धिर्भवति।[2]

निष्कर्षः - अतः निष्कर्षतः एतत्कथयितुं शक्यते यत् भूयो भूयः साहचर्य-दर्शनेन सम्बन्धस्य ग्रहणं न भवति एतादृशं च सम्बन्धग्रहणमनुमानाङ्गं न भवितुं शक्यते। परमविनाभावनियमः एवानुमानस्याङ्गमस्ति। अयमविनाभावनियमो द्वाभ्यां प्रकाराभ्यां गृहीतोऽस्ति प्रथमस्तु कार्य-कारणभावेन, यथा - धूमोऽग्नेर्कार्यमस्ति, सोऽग्निं विना न भवति। अतः कार्यकारणभावेन अयं निश्चयो भवति यत् धूमस्य वह्निना सह अविनाभावनियमोऽस्ति। द्वितीयस्तु तादात्म्येन अविनाभावस्य निश्चयो भवति, यथा - अयं वृक्षः शिंशपात्वात्। शिंशपा एको वृक्षोऽस्ति, अतः वृक्षः शिंशपायाः स्वभावो अस्ति अर्थात् शिंशपायाः वृक्षविशेषेण सह तादात्म्यमस्ति। शिंशपात्वं वृक्षत्वं विना न भवितुं शक्यते, एतस्मात् शिंशपात्वस्य वृक्षत्वेन सह अविनाभावसम्बन्धोऽस्ति। अतः तादात्म्यतदुत्पत्तिसम्बन्धः एव अविनाभावनियमः। अयमेव बौद्धदर्शने स्वभावप्रतिबन्धः (अविनाभावसम्बन्धः) कथ्यते।[3]

*****

---

१. (क) श्चेरबात्स्की, बुद्धिस्ट, लॉजिक, पृ. ७६

(ख) धर्मोत्तरप्रदीपः, पृ. ११५

२. ते च तादात्म्यतदुत्पत्ती स्वभावकार्ययोरेवेति ताभ्यामेव वस्तुसिद्धिः', न्यायबिन्दुटीका, २.२४

३. श्रीनिवासशास्त्री, बौद्धदर्शनस्य विकासः, पृ. १५२

'हरिप्रभा' वर्षम्-२०, अङ्कः-१०-१२ ( २०२३ ) ISSN 2278-0416

# भारतीयदर्शने ख्यातिस्वरूपविमर्शः

*डॉ. निताई पाल

वि-पूर्वकात् मृश्-धातुना घञ्-प्रत्ययेन विमर्शः इति पदं निष्पद्यते। विमर्शपदं विशिष्टज्ञानबोधकम्। ज्ञानं सदैव सविषयकं भवति। ख्यातिस्वरूपमत्र विषयः। ये जनाः स्वल्पेनायासेन ख्यातिवादविषयकं ज्ञानं लब्धुमिच्छन्ति, तेषां कृते अस्य निबन्धस्योपयोगिता वर्तते। ग्रन्थेन सह विषयस्यात्र प्रतिपाद्यप्रतिपादकभावः वर्तते। भारतीयदर्शने ख्यातिवादः अन्यतमः सिद्धान्तः। भारतीयवैदिकावैदिकदर्शनेषु स्वस्वसिद्धान्ततत्त्वप्रतिपादने तत्तत्त्वज्ञाः विभिन्नवादमनुसरन्ति। भारतीयदर्शने केचन वादाः श्रूयन्ते। तर्कशास्त्रनिपुणाः गदाधरभट्टाचार्याः वादविषये शक्तिवादः, व्युत्पत्तिवादः, विषयतावादश्चेति अष्टादश-वादग्रन्थान् रचयामासुः। जगदुत्पत्तिविषये नैयायिकः आरम्भवादः, परमाणुवादः वा असत्कार्यवादश्चेति गदति, सांख्यस्तु परिणामवादः सत्कार्यवादश्चेति स्वीकरोति, बौद्धास्तावत् संघातवादः, शून्यवादः विज्ञानवादश्चेति वादमेकैकमुपगच्छन्ति। यद्यपि परस्परं तत्तत्सिद्धान्तिनः युक्त्या तर्केण खण्डयन्ति तथापि स्वस्वमतसम्मततत्तद्वादं न परित्यज्यन्ति। भारतीयदर्शने रूपरसादिविषयकज्ञानं भवति त्यस्मिन् विषये चार्वाकादयः सर्वे दार्शनिकाः परस्परं न विवदन्ते। पित्तदोषदूषितेन्द्रियं पीतशङ्खवत् ज्ञानमुत्पादयति। तत्र धवलः शङ्खः इति ज्ञानं यथार्थ भवति। पीतः शङ्खः इति ज्ञानमयथार्थमथवा भ्रमात्मकम्। (Bhattacharayay, २०१३). अयथार्थानुभवः अप्रमा भवति। महर्षिगौतमेन न्यायसूत्रे सूत्रितम् - "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्"।[१] (Tarkabagish, २०११) दिनकरीकारः अत्र भ्रमवारणाय अव्यभिचरतीति पदं निवेशयति। एवं न्यायकारिकायं विश्वनाथन्यायपञ्चाननः गुणप्रकरणे अगादि- "तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता" (विश्वनथन्यायपञ्चाननः:१७४)। तदभाव-

---

* DEPT. OF SANSKRIT (Nyaya), NABADWIP VIDYASAGAR COLLEGE, UNIVERSITY OF KALYANI, NADIA, WEST BENGAL, PIN: 741302, MAIL: nitaipalrkmv5@gmail.com, M.B: 9064492980, 9474751949

१. गौतमस्य न्यायसूत्रम् १/१/१

तत्प्रकारकं ज्ञानं भ्रमः इति भ्रमस्वरूपं मुक्तावल्ल्यां दर्शयति। भ्रमात्मकं ज्ञानं भवति इति न्यायमतं सर्वजनैः विदितम्। अन्ये च मीमांसकाः दार्शनिकाः भ्रमं स्वमतख्याति-वादानुसारमुपपादयन्ति। भ्रमोपपत्तेः ख्यातीनां प्रवृत्तिर्भवति। (Bhattacharyay,P. (२०१६) भारतीयदर्शने जगज्जीवब्रह्मविषयकं यत् ज्ञानं जायते तज्ज्ञानविषयिनी चर्चा शास्त्रेषु ख्यातिनाम्ना प्रख्यायते। सा ख्यातिः यथार्थायथार्था वेति इत्यस्मिन् विषये चर्चा उदेति।

ख्या-धातोः क्तिन्-प्रत्ययेन ख्याति इति पदं निष्पद्यते। अयं शब्दः प्रशंसा, प्रसिद्धिः, प्रकाशः च इत्यादिषु अर्थेषु प्रयुज्यते। सा ख्यातिः बहुविधा भवति यथा अन्यथाख्यातिः, सत्ख्यातिः, असत्ख्यातिः, अख्यातिः, आत्मख्यातिः, अनिर्वचनीयख्यातिः। एतासु ख्यातिषु सुप्रसिद्धाः पञ्चख्यातयः वर्तन्ते। तथा च-

**"आत्माख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।**
**तथानिर्वचनख्यातिरित्येतख्यातिपञ्चकम्॥**
**योगाचारा माध्यमिकास्तथा मीमांसका अपि।**
**नैयायिका मायिनश्च पञ्चख्यातीः क्रमाज्जगुः। ( भीमाचार्यः २५६ )**

**॥आत्मख्यातिः॥**

विज्ञानवादिनः बौद्धाः आत्मख्यातिं मन्यमानाः आत्मनो बुद्धेः ख्यातिः विषयरूपेण प्रतिभासः आत्मख्यातिरिति वदन्ति। विज्ञानमयं जगत्। घटपटादयः सर्वे पदार्थाः विज्ञानस्याकारभेदाः। विश्वनाथन्यायपञ्चाननः अपि वदति- "ज्ञानसुखादिकं तु तस्यैवाकारविशेषः इति, तस्य स्वतः प्रकाशरूपत्वात् चेतनत्वम्" (विश्वनाथन्यायपञ्चाननः १५९)।[१] (Bhattacharyay, P. (२०१६) अतः विज्ञानातिरिक्तं किमपि वस्तु नास्ति इति तेषां सिद्धान्तः। विज्ञानमेवात्मेत्यत्र-

**"तदस्यादालयविज्ञानं यद्भवेदहमास्पदम्।**
**तत्स्यादालयविज्ञानं यन्नीलादिकमुल्लिखेत्"॥[२] ( माधवाचार्यः १५ )**

Bhattacharyay, A. (2013).

इदं रजतमिति भ्रमात्मकं ज्ञानं यद्भवति तत्र उपपत्तिम् एवं प्रदर्शयन्ति यथा-शुक्तिः विज्ञानस्य आकारविशेषः भवति तथा रजतं च, तद्रजतं नेत्रेन्द्रियं प्रकाशयति। तत्र भासमानं रजतमसन्न भवति, अथवा अनिर्वचनीयं च न भवति। अतः नेदं रजतमिति ज्ञाने सति बाधकसत्त्वात् तद्रजतं बाधकमिति बाधकज्ञानं रजतम्, रजतं तु

१. भाषापरिच्छेदः
२. सर्वदर्शनसंग्रहः १२१ तमे पृष्ठे

न बाधते। तत्र पुरोवर्त्तित्वरूपधर्मं निषेधति। अतः विज्ञानाकारतया रजतमस्ति। आत्मनः विज्ञानस्य ख्यातिः प्रतीतिस्तु घटते इति तेषामाशयः। तत्त्वदीपिकायां चित्सुखाचार्यः आवेदयति- "नेदं रजतमिति बाधस्येदन्तमात्रास्य गोचरत्वात्, द्वयोर्बाधककल्पनायां कल्पनागौरवात् नेदं रजतमिति च रजते बाधदर्शनात्" (चित्सुखाचार्यः १२७)। रजतं विज्ञानस्याकारविशेषः इत्यत्रानुमानप्रमाणं प्रदर्शयति यथा रजतं संविदाकारः सम्प्रयोग-मन्तरेणापरोक्षत्वात् संवेदनवदिति। घटपटादीनां ज्ञानं तु इन्द्रियसन्निकर्षजम्, किन्तु इदं रजतमिति ज्ञानं रजतेन सह इन्द्रियसम्बन्धं विना जायते, तथापि अपरोक्षत्वं तस्य ज्ञानस्य न हीयते। अनेन प्रकारेण बौद्धिकदर्शिनः "इदं रजतमिति ज्ञानं आत्मख्यातिमुखेन सम्भवति इति उपपादितवन्तः।

।।असत्ख्यातिवादः।।

माध्यमिकबौद्धाः असत्ख्यातिमङ्गीकुर्वन्तः। तन्मते बाह्यप्रपञ्चस्यापि अलीकत्वम्, तद्विषयकज्ञानस्यापि मिथ्यात्वमिति कृत्वा सर्वशून्यत्वे पर्यवसानम्। ज्ञेयः विषयः ज्ञानस्य निरूपकः भवति। अतः ज्ञेयस्य मिथ्यात्वे ज्ञानस्यापि मिथ्यात्वमिति वक्तव्यम्। ज्ञातुः अपि मिथ्या भवति। भ्रमस्थले यथा आरोप्यस्य मिथ्यात्वम्, तथा अधिष्ठानस्यापि मिथ्यात्वमङ्गीकुर्वन्तः माध्यमिकाः शून्यवादिनः। (Bhattacharyay, A. (२०१३). न्यायमकरन्दकारः गदति- "अन्ये तु अत्यन्तमसन्तमर्थमवभासयती संविदेव विभ्रम इत्याचक्षते।" (आनन्दबोधभट्टारकः १०२) तत्तदीपिकायां चित्सुखाचर्यस्तु अगादि- "विज्ञानमेवासत्प्रकाश इत्यसत्ख्यातिनामसत्प्रलाप इत्यारोप्यमाणं नासत्।"[१]

।।अख्यातिवादः।।

प्रभाकरं विना सर्वे पूर्वमीमांसकाः दार्शनिकाः यथार्थोऽयथार्थश्चेति द्विविधो-ऽनुभव इति स्वीकुर्वन्ति। प्रभाकरः अयथार्थानुभवः नास्ति इति वदति। तस्य नये भ्रमात्मकं ज्ञानमिति कश्चन पदार्थः नास्ति। सर्वाणि अपि ज्ञानानि यथार्थभूतानि। इदं रजतमिति ज्ञानमनेनैषां मते भवतु भ्रमः। किन्तु प्रभाकरस्तज्ज्ञानं यथार्थात्मकमिति प्रतिपादनायाख्यातिवादमनुसरन् तद्वर्णयति। अयं वादः प्रभाकरस्य इति मन्तव्यम्। सर्वे प्रत्ययाः यथार्थाः तर्हि इदं रजतमिति ज्ञानं यथार्थ एव। चक्षुसन्निकृष्टवस्तु इदन्तेन गृह्यते। रजतं न कदापि इन्द्रियसम्बन्धं भवति। अतः अ-ख्यातिः न ख्यातिः अर्थात् रजतस्य ख्यातिर्नास्ति। रजतं न भासते। अतः रजतमिति ज्ञानम् इदमंशे प्रत्यक्षं, रजतांशे तु स्मरणं भवति। तत्र प्रत्यक्षत्वस्मरणत्वधर्मद्वयं विद्यत इति प्रभाकराः। भ्रमस्य

१. तत्त्वदीपिका

स्पर्शोऽपि तत्र नानुभूयते।

।।अन्यथाख्यातिवादः।।

ख्यातिशब्दस्यार्थो भ्रमज्ञानमिति दृश्यते। उद्योतकारेणापि ख्यातिशब्दस्यार्थः ज्ञानमिति निर्णीतम्। अनुमितिदिधितिकारेणाप्यसत्ख्यातिशब्दस्यार्थव्याख्यया उच्यते "ख्यातिज्ञानम्" इति। योगदर्शनेऽपि "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" (१।२।६)[1] इति सूत्रं पतञ्जलिना सूत्रितम्। इत्यस्मिन् सूत्रेऽपि ख्यातिशब्दस्यार्थः ज्ञानं प्रतिपादितम्। एकस्य वस्तुनो भिन्नरूपेण प्रतीतिरेवान्यथाख्यातिः इति। अन्यथाख्यातिवादिनां न्यायवैशेषिकानां नये शुक्तिपदार्थे रजतज्ञानकाले शुक्तिरजतौ सद्रूपेण विद्येते। तत्र शुक्तिः यद्यपि सद्रूपेण विद्यते तथापि रजतः अन्यत्र विद्यते। तेषां नये "इदं रजतम्" इत्येवं यत् ज्ञानं जायते तद्विशिष्टज्ञानरूपेण समुपलभ्यते। विशिष्टज्ञानतः भ्रान्तज्ञातुः रजतस्य ग्रहणे प्रवृत्तिः जायते। ज्ञानमिदं विशेष्यविशेषण-सम्बन्धावच्छिन्नविशिष्टज्ञानम्। अत्र शुक्तिः विशेष्यरूपेण, रजतः तु विशेषणरूपेण प्रतिपद्यते। वस्तुतः एतेषां सम्बन्धः नास्ति। एतेषां सम्बन्ध आरोपितः। अनेनारोपितसम्बन्धेन "इदं रजतम्" इत्येवं रजतत्वविशिष्टस्य शुक्तिपदार्थस्य ज्ञानं भवति। भ्रान्तज्ञानमिदं प्रत्यक्षात्मकमिति मन्यते। ज्ञानमिदं लौकिकसन्निकर्षेण न सम्भवति। किन्त्वलौकिकप्रत्यक्षेण सम्भवति। भ्रमज्ञाने शुक्तिपदार्थः शुक्तित्वरूपेण न प्रतिभासते। अतो भ्रमज्ञानमिदमन्यथाख्यातिरिति नाम्नाभिधीयते। अलौकिक-प्रत्यक्षमाध्यमेण सादृश्यादिज्ञानतः प्रथमतया पूर्वानुभूतस्य रजतस्य स्मरणात्मकं ज्ञानं जायते। अलौकिकसन्निकर्षः अत्र ज्ञानलक्षणाप्रत्यासत्तिः इति नाम्नाभिधीयते। अत्र अतीते लब्धस्य रजतस्य ज्ञानेन रजतस्मृतिना च रजतस्य प्रत्यक्षं सम्भवति। इयं स्मृतिः ज्ञानलक्षणालौकिकसन्निकर्षसम्भूता। अनेन सन्निकर्षेण देशान्तरीयरजतेन सह सन्निकर्षः जायते। ततः रजतं सन्निकृष्टस्य पदार्थस्य विशेषणरूपेण समुपलभ्यते। तेन "इदं रजतम्" इत्येवं भ्रमज्ञानं जायते। अत्र प्रत्यक्षभूतं रजतं न मिथ्या भवति। अन्यत्रस्थितस्य रजतत्वस्य बोधः अत्र जायते इति अन्यथाख्यातिवादः। (Tarkabagish, F. (२०११). अन्यत्र शुक्तिकादौ अन्यधर्मस्य अवभास एव अध्यासः। अन्यथाख्यातिवादिनस्तु बाह्यशुक्तादौ बुद्धिरूपात्मनो धर्मस्य रजतस्य अध्यासः, आन्तरस्य रजतस्य बाह्यावभासः जायते। रज्जुपदार्थे यदा सर्पभ्रमः जायते, तदा रज्जुपदार्थेन सह सम्बन्धयुक्तस्य दोषविशिष्टस्य चक्षुरिन्द्रियस्य सन्निकर्षः जायते, तत नेत्रदोषप्रभावतः बल्मीकादौ स्थितस्य सर्पस्य प्रतीतिर्जायते। अनेन दूरवर्तिस्थाने स्थितस्य सर्पस्य सन्निकृष्टे ख्यातिर्जायते।

१. स्वामिभर्गानन्दसम्पादिते, पातञ्जलयोगदर्शने, २५ तमे पृष्ठे।

अर्थात् दूरवर्तिवस्तुनः निकटवर्तित्वरूपेणान्यधर्मसंयोगेन यद्बोधः जायते अत्र धर्म-धर्मिनोः अंशविशेषे सर्पस्य ज्ञानं यथार्थम्। किन्तु देशांशे तस्य ज्ञानं मिथ्या भवतीत्यन्यथाख्यातिवाद इति प्राचीननैयायिकानां मतम्। नवीननैयायिकानां नये अन्यथाख्यातिवादः तु "इदम्" इत्याकरकं सामान्यज्ञानम्। रज्जुपदार्थे सर्पभ्रमकाले प्रथमतः "इदम्" इत्याकारकेण रज्जुसामान्यस्य ज्ञानं जायते, किन्तु इन्द्रियदोषतः रज्जुत्वावच्छिन्नरज्जुरूपेण ज्ञानं न जायते। इदमित्याकारकं सामान्यज्ञानान्तरं विशेषज्ञानस्याकाङ्क्षा जायते। ततः रज्ज्वा सह सर्पस्य सादृश्यमुपपन्नम्। रज्जुसर्पयोः तत्सादृश्यज्ञानमुद्बोधकरूपेण बल्मीकादौ पूर्वानुभूतस्य सर्पसंस्कारस्योद्बोधकं भवति। ततः पूर्वानुभूतस्य सत्यसर्पस्य स्मृतिर्जायते। स्मृतिज्ञानमिदं सन्निकर्षरूपेण बल्मीकादौ स्थितस्य सत्यसर्पस्य प्रत्यक्षज्ञानमुत्पादयति। सन्निकर्षोऽयं न्यायवैशेषिकदर्शने ज्ञानलक्षणसन्निकर्षः नाम्नाभिधीयते। अन्येषां नैयायिकानां नये ख्यातिवादस्य मतवैभिन्नमस्ति। रज्जुपदार्थेन सह चक्षुरिन्द्रियस्य सन्निकर्षः जायते। ततः तत्र सर्पभ्रमे विलम्बनं न जायते। अक्ष्णा सह रज्जुपदार्थस्य सम्बन्धः, सर्पभ्रमस्योत्पादिका स्मृतिः, ज्ञानलक्षणसन्निकर्षश्च इत्येषां व्यवधानं न स्वीकृतम्। संस्कारोद्बोकारिवस्तुनोः धर्मः पूर्ववर्तिनि पदार्थे प्रतिभासते। रज्जुसर्पयोः सादृश्यज्ञानेन पूर्वदृष्टस्य सर्पस्य संस्कारविशेषस्य यदा उद्बोधको भवति तत इदमित्याकारेण प्रतिभातरज्जुपदार्थे सर्पत्वं प्रतिपादितम्। अन्यथाख्यातेः स्थलवैभिन्नमस्ति यत्र ज्ञानलक्षणसन्निकर्षादीनां प्रयोजनं नास्ति।

अधिष्ठानारोप्यपदार्थयोः चक्षुसन्निकर्षे स्थितेऽपि एकपदार्थेऽपरपदार्थस्य भ्रमज्ञानं जायते। विशेषाज्ञानसहकृतसादृश्य-ज्ञानमेवान्यथाख्यातेः कारणम्। अन्यत्रान्यपदार्थस्य प्रती-तिरित्यन्यथाख्यातिवादः। बौद्धदर्शनेऽप्यन्यथाख्यातेः मतमस्ति- "अन्यत्र अन्यधर्माध्यासः" इति। Chitghanananda, S.,Jha,V.A. (२०१३).

॥अनिर्वचनीयख्यातिवादः॥

अद्वैतवेदान्तिनां वादः अनिर्वचनीयवादः। वादेऽस्मिन् "इदं रजतम्' इत्यत्र इदं पदार्थः अधिष्ठानं रजतमारोप्यं भवति। वस्तुतस्तु इदं पदार्थः शुक्तिः यस्मिन् ब्रह्मचैतन्ये अध्यस्ता तदेव चैतन्यम् "इदम्' इत्याकारेण भासमानं सत् अधिष्ठानमिति वक्तव्यम्। शुक्तेः अधिष्ठानत्वमौपचारिकमेव। तत् चैतन्यावरकं यदज्ञानमस्ति तस्य शक्तिद्वयं वर्तते यथा आवरणशक्तिः, विक्षेपशक्तिश्चेति। तत्र आवरणशक्तिः शुक्तिगतशुक्ति-त्वादिविशेषांशस्य अनवभासं प्रति कारणम्। विक्षेपशक्तिस्तत्र अविद्यमानस्य रजतस्यावभासं प्रति कारणम्। अर्थात् शुक्त्यवच्छिन्नचैतन्यावरकमज्ञानं विद्यमानं वस्तु आच्छाद्य अविद्यमानं

वस्तु विक्षिपत् आरोप्यपदार्थं प्रति उपादानकारणं भवति। इदमाकारेण भासमानं शुक्त्यवच्छिन्नं चैतन्यं विवर्तकारणमिति व्यवह्रियते। अनेन शुक्त्यवच्छिन्नं चैतन्यं स्वप्रधानतया रजतं प्रति निमित्तकारणं, तदावरकाज्ञानविधया उपादानकारणञ्च भवतीत्यतः तस्य अभिन्ननिमित्तोपादानकारणत्वमपि संगच्छते। तच्च उत्पद्यमानं रजतं न लौकिकं रजतमिति कृत्वा तस्य उत्पत्त्यर्थं लौकिकरजतोत्पादिका सामग्री अपि नापेक्षिता। तस्य रजतस्य लोकविलक्षणत्वात् नाम सदसद्विलक्षणत्वमेव। भासमानत्वात् न तदसद्। बध्यमानत्वात् न सत्। अतः सदसद् भिन्नमिति निर्णयः। अस्त अनिर्वचनीयरजतस्य उत्पादिका सामग्री का इत्याशङ्कायामुच्यते वेदान्तपरिभासायाम्- "काचकामलादिदोषदूषितलोचनस्य पुरोवर्तिद्रव्यसंयोगात् इदमाकारा चाकचिक्याकारा काचिदन्तः कारणवृत्तिरुदेति तस्यां च वृत्तौ इदमवच्छिन्नं चैतन्यं वृत्त्यवच्छिन्नं चैतन्यं प्रमातृचैतन्यं चाभिन्नं भवति। ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठा शुक्तित्वप्रकारिका अविद्या चाकचिक्यादिसादृश्यसन्दर्शनसमुद्बोधिरजतसंस्कारसध्रीचीनाकाचादिदोषसमवहिता रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमते।" Chitghanananda, S.,Jha,V.A. (२०१३).

पञ्चातिरिक्तरामानुजाचार्यस्य विशिष्टाद्वैतसिद्धान्ते अत्ख्यातिरित्यन्या काचन ख्यातिः प्रसिद्धा। तत्सिद्धान्ते इदं रजतमिति ज्ञानं न भ्रमः, यथार्थमेव, किन्तु विषयव्यवहारबाधात् भ्रमत्वम्। यतीन्द्रमतदीपिकायाम्- "यथार्थसर्वविज्ञानमिति वेदविदां मतम् इत्युक्तत्वात् भ्रमादिप्रत्यक्षादिज्ञानं यथार्थमेव। सत्ख्यातिर्नाम ज्ञानविषयस्य सत्यत्वम्। तर्हि भ्रमत्वं कथमिति चेत् विषयव्यवहारबाधात् भ्रमत्वम्। तदुपादयति पञ्चीकरणप्रक्रियया पञ्चभूतसंयुक्तानि भवन्ति। शुक्तौ अपि रजतांशः वर्तते। स एव रजतांशः सत्यः तज्ज्ञाने भासते। विद्यमानमेव रजतं विषयः भवति। किन्तु रजतांशस्याल्पत्वात् तस्य ज्ञानस्य भ्रमत्वम् इति तेषामाशयः

॥अनुशीलिताग्रन्थसूची॥


- Abhyankar, M.V.S. (1928). Nyāyakosa. Poona: The Bhandarkar Research Institute.
- Bhattacharyay, A. (2011). Nyāyamanjurî. Kolkata: Sanskrit Pustak Vandar.
- Bhattacharyay, A. (2013). Sarvadarshansangraha. Kolkata: Sanskrit Pustak Vandar.

- Bhattacharyay, A. (2013). Bhāratiyadarshan. Kolkata, Sanskrit Pustak Vandar.
- Bhattacharyay, P. (2016). Bhāsāparicheda. Kolkata: Mahabodhi Book Agency.
- Chakroborty, S. (2007). *Sarvadarshanasangraha* (3rd Ed., Vol. 1st). Kolkata: Sahityashri.
- Chakroborty, S. (2007). *Sarvadarshanasangraha* (3rd Ed.,Vol. 2nd). Kolkata: Sahityashri.
- Goswami, N. (2009). *Sankhyadarshana* (3rd Ed.) Kolkata: Sanskrit Book Dipo-
- Goswami, N. (2001). Tarkasamgraha. Kolkata: Sanskrit Pustaka Vandara.
- Tarkabagish, F. (2011). Nyāyadarshanam (Vol. 1st). Kolkata: Pachimbanga rajyapustak parsat.
- Tripathi, D. (2009). Tatwachintamani. Kolkata: Sanskrit book dipo.
- Tarkabagish, F. (2011). Nyāyadarshanam(Vol. 2nd). Kolkata: Pachimbanga rajyapustak parsat.
- Chitghanananda, S.,Jha,V.A. (2013). Vedantadarshana. Kolkata: Udvodhankaryalaya.
- Vargananda, S. (2014). pātanjal Yogadarshn. Kolkata:Udvodhan-karyalaya.


*****

'हरिप्रभा' वर्षम्-२०, अङ्कः-१०-१२ ( २०२३ ) ISSN 2278-0416

# सांख्यदर्शने गुणतत्त्वविमर्शः

*सबनुर-पारभीन्
**डॉ.स्वपन-मालः

उपक्रमः - भारतीयदर्शनप्रस्थानेष्वत्यन्तप्राचीनतमं दर्शनं वर्तते सांख्यदर्शनम्। सांख्यदर्शनस्य रचयितृरूपेण महर्षिकपिल एव मानसपटमस्माकमायाति। षडाध्यायात्मकसांख्यसूत्रमेव सांख्यदर्शनस्य मूलभित्तिरस्ति। तत्रैव पञ्चविंशतितत्त्वानि स्वीक्रियन्ते। तत्र प्रधानं तथा अन्यतमं मूलतत्त्वन्तु प्रकृतितत्त्वमिति मन्यते। सांख्यदर्शनसम्मतप्रकृतिस्तु सत्त्वरजस्तमसां गुणत्रयाणां साम्यावस्थेति कथ्यते। सम्प्रति सांख्यदर्शने अर्थात् सांख्यसूत्रे तथा अन्येषु सांख्यग्रन्थेषु यथा, विज्ञानभिक्षुकृतप्रवचनभाष्ये, सांख्यतत्त्वविवेचने, सांख्यकारिकायामपि च तस्याः टीकासु कथं सांख्यसम्मतं गुणस्वरूपं प्रतिफलितमस्तीति विचारः प्रदर्श्यते निम्नालोचितेन प्रकारेण।

## सांख्यप्रवचनभाष्ये प्रतिफलितं गुणस्वरूपम्

आचार्यविज्ञानभिक्षुविरचिते सांख्यसूत्रस्य भाष्ये तथा प्रवचनभाष्ये गुणत्रयाणां विस्तृतव्याख्या प्रदीयते। तद्यथा-"प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योऽन्यं वैधर्म्यम्"[१] इति। प्रवचनभाष्यानुसारं सूत्रस्यास्य विस्तृतव्याख्यानमुपस्थाप्यते- गुणानाम् अर्थात् सत्त्वादिद्रव्यत्रयाणां परस्परसुखदुःखादिनां कारणन्तु वैधर्म्यमेव। सत्त्वगुणस्तु प्रीतिस्वरूपम्, रज अप्रीतिस्वरूपम् अपि च तमोगुणस्तु विषादस्वरूपं भवति। एतस्मादेव स्वरूपात् तत्तद्गुणानाम् अपरसर्वेषां विशेषतानां प्रतीतिर्जायते। सत्त्वगुणस्यापरविशेषतासु प्रसन्नता-लघुत्व-तितिक्षा-सुख-सन्तोषादीनि कथ्यन्ते। रजोगुणस्यापरविशेषतासु ईर्ष्या-दुःख-शोक-तृष्णादीनि। अपि च तमोगुणस्य विशेषतासु मोह-प्रमोद-निद्रा-जडतादीनि प्रतिपद्यते। प्रीतिः, अप्रीतिः विषादश्च तत्तद्गुणानामेव स्वरूपं स्यात्। अतो हि प्रीत्यादयः सत्त्वादेः परस्परवैधर्म्यरूपेण प्रतिभाति। रूपादेः समानमेव हि घटादेरपि सुखादि

---

* शोधच्छात्रा, संस्कृतविभागः, रायगञ्जविश्वविद्यालयः
** सहायकाचार्यः, संस्कृतविभागः, रायगञ्जविश्वविद्यालयः, पश्चिमबङ्गः

१. सांख्यसूत्रम्-१/१२७

जायते। अतः सुखादिः धर्मः इति शब्दवाच्यो भवति। यतो हि कार्यान्तरे तु अन्तः करणोपादानता भवत्येवेत्युच्यते। श्रीपञ्चशिखाचार्यस्तु सूत्रगतस्य आदि-इति शब्दस्य ग्राहकमित्युक्तवान्- "सत्त्वं नाम प्रसादलाघवाभिष्वङ्ग प्रीतितितिक्षासन्तोषादिरीपान्तभेदं समासतः"[1] इति। अर्थात् सत्त्वन्तु बहुरूपात्मकं वर्तते। तस्माद्धि प्रसाद-लाघव-अभिषङ्ग-प्रीति-तितिक्षा-सन्तोषादयः अनन्तभेदाः भवितुमर्हन्ति। अतो हि संक्षेपतः 'सुखात्मकम्' इति कथ्यते। एवं हि रजसोऽपि अनेकरूपाणि सन्ति। यथा-शोकः-तृष्णा-ईर्ष्या-दुःखादय अनन्तभेदाः भवितुमर्हन्ति। अतो हि संक्षेपतः 'दुःखात्मकम्' इति कथ्यते। तथैव तमसोऽपि बहुरूपाणि वर्तन्ते। यथा-निद्रा-प्रमाद- मोह-कलह-क्रोधादय अनन्तभेदाः भवितुमर्हन्ति। अतो हि संक्षेपतस्तु 'मोहात्मकम्' इति कथ्यते। अथ हि विज्ञानभिक्षुना सत्त्वादिगुणत्रयाणां द्रव्यत्वप्रतिपादनावसरे उक्तम्- "अत्र प्रीत्यादीनां गुणधर्मत्ववचनादागामिसूत्रे च लघुत्वादेर्वक्ष्यमाणत्वात् सत्त्वादीनां द्रव्यत्वं सिद्धं सत्त्वं नाम प्रसादलाघवाभिष्वङ्गप्रीतितितिक्षासन्तोषादिरीपान्तभेदं समासतः"[2] इति। अर्थात् अत्र हि प्रीत्यादिगुणानां धर्मः कथितोऽपि च आगामिनि सूत्रे तेषां प्रीत्यादीनां लघुत्वादि-धर्मस्तु कथयिष्यते। तस्माद्धि सत्त्वादीनां द्रव्यत्वसिद्धिर्भवति। गुणानां सुखाद्यात्मकता तु मनसः सङ्कल्पात्मकतायाः समानं धर्माधर्म्यौ अभेदादेव हि उपपन्नं भवति। वैशेषिकैरुक्तं सुखादिकमेव सत्त्वादिगुणत्रयं नास्तीति। सत्त्वादिभेदत्रयन्तु व्यक्तिभेदादनन्तं वर्तते। अन्यथा विभुपरिमाणमात्रस्वीकृते सति गुणविमर्दवैचित्र्यात् कार्यवैचित्र्यमिति सिद्धान्तो नोपपद्यते। यतोहि विमर्देऽवान्तरभेदासम्भवात्। सत्त्वादिगुणानाम् एकैकव्यक्तिमात्रत्वे वृद्धिह्रासादिकं नोपपद्यते। तथा परिच्छिन्नत्वे च तत्समूहरूपस्य प्रधानस्य परिच्छिन्नत्वा-पत्याश्रुतिस्मृतिसिद्धमेकादऽसङ्ख्यब्रह्माण्डादिकं नोपपद्यते। अतो हि गुणानामनेकत्वं अभिसञ्जानाति। अतः गुणानामसंख्यत्वे त्रित्वसङ्ख्योपपादनाय विवेकाद्यर्थञ्च तेषां साधर्म्यवैधर्म्यादिकञ्च प्रतिपादयति- "लघ्वादि धर्मैः साधर्म्यं वैधर्म्यं च गुणानाम्"[3] इति। अर्थात् गुणानां लघ्वादिधर्मैव साधर्म्यं वैधर्म्यञ्च भवति। भाष्यकारेण विज्ञानभिक्षुना सूत्रस्यास्यार्थस्तु सम्प्रसारितम्। यथा- लघ्वादीति भावप्रधानो निर्देशो भवति। सर्वसत्त्वव्यक्तीनां लघुत्वादिधर्मात् साधर्म्यं स्यात्। यतो हि लघुत्व-

---

१. प्रवचनभाष्यम्-१/१२७
२. तत्रैव-१/१२७
३. सांख्यसूत्रम्-१/१२८

धर्मस्तु सर्वसत्त्वगुणव्यक्तीनां समानं भवति। अर्थात् सकलसत्त्वव्यक्तीनां साधर्म्यन्तु लघुत्वम् इति धर्मस्य कारणादेव स्यात्। पुनश्च रजः तथा तमः व्यक्तिभिः सह लघुत्वन्तु वैधर्म्यं स्यात्। तथा च पृथिवीव्यक्तीनां पृथिवीत्वेनैव सत्त्वव्यक्तीनामेक-जातीयतयैकता सजातीयोपष्टम्भादिना वृद्धिह्रासादिकं च युक्तम् इत्याशयः। एवं चञ्चलत्वादिधर्मेण सत्त्वरजोव्यक्तीनां साधर्म्यं सत्त्वतमोभ्यां च वैधर्म्यम्। शेषस्तु पूर्ववत्। एवं गुरुत्वादिधर्मेण सकलतमोव्यक्तीनां साधर्म्यम्, सत्त्वरजोभ्यां वैधर्म्यम्। शेषः पूर्ववदिति। वैधर्म्यन्तु प्रागेवोक्तम्, तथाप्यत्र प्रसङ्गप्राप्ततया पुनस्तु वैधर्म्यकथनं स्यात्। आलोच्यसूत्रे सत्त्वादिकारणद्रव्येषु प्रत्येकेषामनेकव्यक्तित्वं सिद्धं स्यात्। अस्मात् स्पष्टं जायते यत्-प्रकृतिः इति नास्ति व्यक्तिरूपतन्त्रमिति। सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरिति कथ्यते। तत्र प्रत्येकेषां गुणानामनेकरूपाणि विद्यन्ते। तस्माद्धि साधर्म्य- कथनमुचितमेव। अन्यथा यदि सत्त्वादिगुणस्तु एकव्यक्तिरूपो भवेत्, तर्हि लघुत्वादि- धर्मैः साध र्म्यकथनस्य किमर्थमावश्यकता न भवेत्। अर्थात् साधर्म्यप्रतिपादनन्तु अनुपपन्नं भवेत्। यतोहि समानवस्तूनां धर्म एव हि साधर्म्यमित्युच्यते। त्रिगुणात्मकत्वेन घटादीनामपि कार्यसत्त्वादिरूपतया लघुत्वादीनां सत्त्वादिसाधर्म्यत्वानुपपत्तेः। तस्मात् कारणाद् गुणानामेवात्र साधर्म्यादिकमुच्यते इति। सांख्यसूत्रकारस्य "सत्त्वरजस्तमसां साम्यावस्थाप्रकृतिः..."[1] इति सूत्रस्यांशव्याख्यानावसरे विज्ञानभिक्षुना कथितम्- उक्ते सूत्रांशे निर्देशिताः सत्त्वरजस्तमोगुणास्तु द्रव्यरूपाः मन्यन्ते। तत्र हि संयोगविभागधर्मौ विद्यत इति। संयोग-विभागधर्मयुतत्वात् द्रव्यम् इति कथ्यते। यतो हि द्रव्यरूपात्मकेषु सत्त्वादिषु लघुत्व-चलत्व-गुरुत्वादयो धर्माः विद्यन्ते। अस्मिन् सांख्यशास्त्रे अपि च श्रुत्यादिष्वपि सत्त्वादिकार्थं गुणः इति शब्दप्रयोगस्य कारणं वर्तते यत् ते गुणास्तु पुरुषस्योपकरणं भवन्ति। पुरुषपशोः बन्धकत्रिगुणात्मकमहदादि रज्जोः निर्माणं कुर्वन्ति। रज्जुं तु गुणः इति कथ्यते। तेषां सत्त्वादिद्रव्याणां या साम्यावस्थाऽन्यूनाधिकभावेनासंहतावस्थेति यावत्। अकार्यावस्थेति निष्कर्षः। अकार्याऽवस्थोपलक्षितं गुणसामान्यं प्रकृतिरित्यर्थः। अथ हि सांख्यसूत्रकारस्य "सत्त्वादीनामतद्धर्मत्वतद्रूपत्वात्"[2] इति सूत्रस्य व्याख्यानवसरे प्रवचन-भाष्यकारेण विज्ञानभिक्षुणोक्तम्- "सत्त्वादिगुणानां प्रकृतिधर्मत्वं नास्ति, प्रकृतिस्वरूप-त्वादित्यर्थः"[3] इति। अर्थात् सत्त्वादिगुणान् तु प्रकृतेः धर्मरूपेण वक्तुं नैव शक्यते।

१. सांख्यसूत्रम्-१/६१
२. तत्रैव-६/३९
३. प्रवचनभाष्यम्, सांख्यसूत्रम्-६/३९

अर्थात् प्रकृतिं तु सत्त्वादिगुणानामाश्रयो नैव वक्तुं शक्यते। यतोहि ते सत्त्वादिगुणास्तु प्रकृतेरेव स्वरूपं वर्तते। यथा वेदस्तु कर्मकाण्डः ज्ञानकाण्डश्च भेदेन द्विधा विभज्यते, तथैव प्रकृतिस्तु सत्त्वम्, रजः, तमः इति नाम्ना त्रिधा विभज्यते। अतो स्वरूपेण एते गुणास्तु प्रकृतिः इत्युच्यते। भोगापवर्गस्य सम्पादनमपि प्रकृतिस्वरूपगुणत्रयेणैव क्रियते। गुणत्रयेणैव हि अन्योन्यमिथुनं भूत्वा सृष्टेः निर्माणं क्रियते।

**सांख्यतत्त्वविवेचने प्रतिफलितं गुणस्वरूपम्**

षिमानन्दविरचिते क्षेमेन्द्रविरचिते वा सांख्यतत्त्वविवेचने त्रैगुण्यप्रसङ्गमुत्थाय श्लोकाकारेण आलोचितम्-

**"सत्त्वं रजस्तम इति गुणाः भावेण्यस्त्रैगुण्यम्।**
**प्रसादो लाघवं सङ्गः प्रसङ्गात् प्रीतिरार्जवम्॥**
**तुष्टिस्तितिक्षा सत्त्वस्य रूपं साक्षात् सुखावहम्।**
**शोकस्तम्भद्वेषतापखेदभोगाभिमानिता॥**
**रजोरूपाण्यनेकानि बहुदुःखप्रदानि वै।**
**तमो नामाच्छादनादि बीभत्सावरणादि च॥**
**दैन्यगौरवनिद्रादिप्रमादालस्यलक्षणम्।**
**मोहात्मकमनन्तं तदेवं त्रैगुण्यमीरितम्॥**
**सत्त्वं प्रकाशकं विद्याद्रजो विद्यात् प्रवर्तकम्।**
**विनाशशकं तमो विद्यात् त्रैगुण्यं नाम संज्ञितम्॥"**[1]

अर्थात् सत्त्वम्, रजः, तमः इति त्रिगुणाः वर्तन्ते। तत्र तुष्टि-तितिक्षादिरूपं सत्त्वगुणस्तु साक्षात् सुखावहो भवति। अनेकरूपात्मकरजोगुणस्तु शोक-स्तम्भ-द्वेष-ताप-खेद-भोगाभिमानयुतो बहुदुःखप्रदायको भवति। तत्र तमोगुणस्तु आच्छादन-बीभत्सावरण-दैन्य-गौरव-निद्रा-प्रमादालस्यादिलक्षणयुतो भवति। अथ गुणत्रयाणां स्वरूपमपि कथितम्, यथा सत्त्वं प्रकाशात्मकत्वेन विद्यते, प्रवर्तकात्मकत्वेन विराजते रजोगुणः, अपि च तमोगुणस्तु विनाशकात्मकत्वेन विराजते। एवमेव हि षिमानन्देन क्षेमेन्द्रेण वा गुणत्रयाणां स्वरूपं वर्णितमिति।

**माठरवृत्यां प्रतिफलितं गुणस्वरूपम्**

माठरवृत्यां प्रतिफलितं गुणस्वरूपन्तु निम्नप्रकारकतया वर्णीयते। तत्र प्रीत्यप्रीतिविषादात्मकाः इत्यस्य व्याख्यानावसरे माठरेणोक्तम्- "प्रीतिश्चाप्रीतिश्च विषादश्च

१. द्रष्टव्यः, सांख्यसंग्रहः, सांख्यतत्त्वविवेचनम्, पत्रसंख्या-१०

ते आत्मा स्वरूपं येषां गुणानां ते भवन्ति प्रीत्यप्रीतिविषादात्मका:"[1] इति। अर्थात् प्रीति:, अप्रीति: विषादश्च येषां गुणानां स्वरूपं वर्तते, ते एव प्रीत्यप्रीतिविषादात्मका: इत्युच्यन्ते। सम्प्रति तेषां प्रीत्यादीनां लक्षणं कथ्यते। तद्यथा- 'प्रीत्यात्मकं सत्त्वम्' इति। अर्थात् सत्त्वगुणस्तु प्रीत्यात्मकं वर्तते। अत्र आत्मशब्दस्यार्थस्तु स्वभाववाचीति। यतोहि सत्वं सुखवर्धकं भवति। य: कश्चित् क्वचित् प्रीतिं लभते तत्र सरलता-कोमलता-सत्यता- शौच-लज्जा-बुद्धि-क्षमा-दया-ज्ञानादिनि सत्त्वगुणस्य कार्यं परिलक्ष्यते, तत् सत्यं प्रत्येतव्यम्। 'अप्रीत्यात्मकं रज:' इति। अर्थात् रजोगुणस्तु अप्रीत्यात्मकं स्यात्। यतोहि रजस्तु दु:खधर्मकं स्यात्। य: कश्चित् कदाचित् क्वचित् अप्रीतिमुपलभते तत्र द्वेषद्रोहमत्सरनिन्दास्तम्भोत्कण्ठानिकृतिवञ्चनाबन्धवधच्छेदनादिनि परिलक्ष्यन्ते, तद्रज: प्रत्येतव्यम्। 'विषादात्मकं तम:' इति। अर्थात् तमोगुणस्तु विषादात्मकं स्यात्। यतोहि तमोगुणस्तु मोहस्वरूपं वर्तते। य: कश्चित् कदाचित् क्वचित् मोहमुपलभते तत्र अज्ञान-आलस्य-भय-दैन्य-अकर्मण्यता-नास्तिकता-विषाद-स्वप्नादिनि परिलक्ष्यन्ते, तत्तम: प्रत्येतव्यम्। अत: 'प्रकाशप्रवृत्तिनियमार्था:' इत्यस्य व्याख्या कृता माठराचार्येण। यथा- प्रकाशश्च प्रवृत्तिश्च नियमश्च ते अर्था: येषां तथोक्ता:। तत्र प्रकाशितव्यमिति सत्त्वस्य, प्रवर्तितव्यमिति रजस:, नियन्तव्यं संहर्तव्यमिति तमस: कार्यं वर्तते। सम्प्रति अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणा: इत्यस्य व्याख्या तु माठरवृत्तिदिशा उपस्थाप्यते। तद्यथा- अन्योन्याभिभवाच्च अन्योन्याश्रयाश्च अन्योन्यजननाश्च अन्योन्यमिथुनाश्च येषां गुणानामन्योन्यवृत्तयश्च विद्यन्ते तथोक्ता:। च शब्दस्तु समुच्चये द्रष्टव्य:। प्रीत्यादयश्च तावत् प्रागभिहिता:। 'अन्योन्याभिभावाच्चेति'- रजस्तमोभिभवात् शान्ता वृत्तिरुत्पद्यते, धर्माद्या यस्य कार्यं वर्तते। एवं हि सत्त्वतमसोरभिभवात् रजसो घोरा वृत्तिरुत्पद्यते, यस्य कार्यन्तु अधर्माद्या इति। पुनश्च सत्त्वरजसोरभिभवात् तमसो मूढवृत्तिरुत्पद्यते, यस्य कार्यन्तु अज्ञानादीति। 'अन्योन्याश्रयश्च गुणा:'- सत्त्वगुणो हि प्रवृत्तिनियमौ आश्रित्य प्रकाशयति। रजोगुणस्तु प्रकाशनियमौ आश्रित्य प्रवर्तयति। तमोगुणस्तु प्रकाशप्रवृत्ती आश्रित्य नियमयति। 'अन्योन्यजननाश्च गुणा:'- अन्योऽन्यं जनयति। कदाचित् सत्त्वन्तु रजस्तमसी जन्यते, कदाचित्तमस्तु सत्त्वरजसी जनयति। यथा सपरिकरकुम्भकाराधिष्ठितो मृत्पिण्डो घटं जनयति तद्वज्जनयन्ति। अन्योन्यं बोधयति इत्येतत् प्रतिगृह्यते यथा देवदत्तयज्ञदत्तौ परस्परं बोधयत एवं बुद्धिस्था गुणा: सत्त्वरजस्तमांसि परस्परं बोधयन्ति। 'अन्योन्यमिथुनाश्च गुणा:'- अवियुक्तधर्मत्वात्

१. माठरवृत्ति:, सांख्यकारिका-१२

परस्परसहचराः। उक्तमपि रजोगुणस्य मिश्रितावस्था तु सत्त्वगुणं वर्तते, सत्त्वगुणस्य मिश्रितावस्था तु रजोगुणं वर्तते, अपि चोभयोः मिश्रितावस्था तु तमोगुणं वर्तते। तद्यथोक्तम्-

**"रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः।**
**उभयोः सत्त्वरजसयोर्मिथुनं तम उच्यते॥"**[१]

अन्योन्यवृत्तयश्च गुणाः- अन्योन्यस्य वृत्तिं जनयति, अर्थात् अन्योन्यस्य क्रियां जनयतीति। यथा हि काचित् स्त्री नयविनयविलासलीलावती आत्मनो भर्तुः बन्धुवर्गस्य च प्रीतिं जनयति, सैव सपत्नीषु दुःखमोहौ जनयति। एवं सत्त्वेन स्त्रीभूतेन रजस्तमसश्च वृत्तिर्जनिता। एवमन्येष्वपि योज्यम्। अत्र खलु सत्त्वरजस्तमांसि जात्यन्तराणि न स्वीक्रियन्ते। अर्थात् यदि सत्त्वगुणस्य सत्त्वजातिः स्वीक्रियते, तर्हि तस्य सम्मिलितावस्था गठनं न भवति। यतोहि संसारस्य सर्वाणि वस्तुनि एव त्रिगुणात्मिकानि। यथा दृश्यते एकैव स्त्री रूपयौवन-उदारता-कोमलस्वभाव-लीलाविलासादेः सम्पूर्णा सती सत्त्वस्वरूपा-त्मिकेति मन्यते। सा च भर्तुः सुखावहा भवति, सपत्नीनां दुःखावहा अपि च रागिणां मोहावहा भवति। एवं हि क्षत्रियसेनाः दुःखप्रहरणकृतापराधां दस्युसेनाम् अभिघ्नती, एतत्तु रजोरूपमित्युपदिश्यते। किन्तु दस्युभिः उपद्रुतानां दार्यमाणानां सुखावहा भवति, दस्युनां दुःखावहा मोहावहा च भवति। एवमेव हि गुणानां परस्परसम्मिलितत्वात् एकमेवेति मन्यते। अथ हि प्रत्येकेषां गुणानां पृथक्-पृथग्जातिः स्वीक्रियते। यतोहि तेषां पृथक्-पृथक् लक्षणं क्रियते। यथा हि कारिकायामुच्यते-

**"सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः।**
**गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः॥"**[२]

कारिकायाअस्याः माठरवृत्तिदिशा निम्नरूपा व्याख्या प्रदीयते। पूर्वालोचितसत्त्वस्य लक्षणेन सह लघुत्वं प्रकाशकत्वञ्चापि तस्य लक्षणं वर्तते। यदा खलु सत्त्वस्योत्कटं भवति, तदा देवदत्तस्याङ्गानि लघुनि भवन्ति। इन्द्रियाणि तु स्व-स्वविषयग्रहणे समर्थानि भवन्ति। सत्त्वस्य लक्षणमिदमेव सांख्याचार्याणामिष्टं स्यात्। यतोहि इदमेव स्वस्वरूप-सत्त्वस्य साधको भवति। रजोगुणस्तु प्रेरको भवति। अर्थात् अत्र खलु नाड्यां तीव्रगतिः तिष्ठति। यथा मत्तवृषो वृषं दृष्ट्वा उद्धतो भवति, तद्वत् अथवा गर्वचला क्रियते इत्यर्थः। एवं यस्मिन् देवदत्ते यज्ञदत्ते वा रजोत्कटं भवति, स कलहं मृगयते किं

१. माठरवृत्तिः, सांख्यकारिका-१२
२. सांख्यकारिका-१३

चान्यत् चलच्चित्तञ्च भवति, ग्रामं गच्छामि, स्त्रियं कामये, तपः करोमि इत्यादिनि। यद् गुरुत्वमावरणत्वं चास्ति तत्तमः यदा गुरुणि अङ्गानि भवन्ति। अथ ह्युच्यते परस्परविरुद्धानामप्यमीषं वृत्तिर्दृष्टा यथा तैलाग्नि-वर्तिकासंयोगात् परस्परविरुद्धा अपि पदार्थाः संहत्य एकमर्थं प्रकाशरूपं कार्यं निष्पद्यते। तथैव गुणा अपि परस्परविरुद्धस्व-भावत्वादपि एकत्रेण मिलिते सति भोगापभोगरूपं पुरुषार्थं निष्पादनं करोति। तथा ह्युच्यते-'प्रदीपवच्चार्थतो वृत्तिः' इति।

**युक्तिदीपिकाटीकायां प्रतिफलितं गुणस्वरूपम्**

सत्त्वरजस्तमोगुणास्तु सांख्यदर्शने अत्यन्तगुरुत्वपूर्णं स्थानं लभन्ते। एतेषां साम्यावस्थैव प्रकृतिरिति कथ्यते। तथा कार्यजगतः प्रत्येकेषु पदार्थेषु ते गुणाः प्रत्यक्षरूपेण अथवा परोक्षरूपेण विद्यन्ते। सृष्टेः सर्वाण्येव वस्तुनि सत्त्वादेरेव सम्भूतानि। अतः निश्चिद्रूपेण वक्तुं शक्यते यत् सत्त्वरजस्तमोगुणेभ्यस्तु सम्पूर्णदृश्यमानमिदं जगत् व्याप्तं स्यात्। सांख्यकारिकायां गुणत्रयाणां स्वरूपमुच्यते- प्रीत्यप्रीतिविषादात्मकाः इति। अर्थात् सत्त्वादिगुणास्तु क्रमशः प्रीतिः, अप्रीतिः विषादस्वरूपाश्च भवन्ति। सत्त्वगुणः प्रीतिस्वरूपोऽर्थात् सुखात्मकः। अप्रीतेरर्थस्तु दुःखम् इति। अतः रजोगुणस्तु दुःखस्वरूपः स्यात। विषादस्तु मोहवाचकः। अतः तमोगुणस्तु मोहस्वरूपः स्यात्। सुखादिपरस्पराभावरूपं नास्ति, अपि तु भावरूपं वर्तते। यतोहि सुखादिभिः सह पठितः आत्मेति शब्दस्तु भाववाचको वर्तते। अपि चास्य भावात्मकता तु अनुभवसिद्धो भवति। सुखादिकं यदि परस्पराभावरूपं मन्येत, तर्हि ते गुणाः एके अपराश्रितं भवेत्। अस्यां स्थित्यां तु एकस्याभावे सति अपरस्याभावोऽपि उपपन्नं भवेत्। एतदतिरिक्तः सत्त्वगुणस्तु लघुप्रकाशकश्च मन्यते। तथा चञ्चलोत्तेजकश्च भवति, अपि च तमोगुणस्तु गुरु-अवरो-धकश्च स्वीक्रियते। युक्तिदीपिकाकारेण तु वस्तूनामुद्गमने सत्त्वगुणस्य लघुत्वधर्म एव हेतुभूतरूपेण कथ्यते। यस्माद्धि करणानाम् इन्द्रियाणां वा व्यापारे पटुता उत्पन्नं जायते। यथोक्तम्- "तत्र कार्यस्य तावदुद्गमहेतुधर्मो लघुत्वम्, करणस्य वृत्तिपटुता हेतुः"[१] इति। रजोगुणस्तु उपष्टम्भकः अर्थात् उत्तेजको भवति। अपि च चञ्चलस्वभावयुतो भवति- "उपष्टम्भकं चलञ्च रजः"[२] इति। यः कश्चिदुपष्टम्भश्चलता चोपलभ्यते तद्रजोरूपमित्यवगन्तव्यम्। तत्र 'उपष्टम्भः' इत्यस्यार्थः क्रियते 'प्रयत्नः' इति, 'चलम्' इत्यस्यार्थः क्रियते 'क्रिया' इति। तत्र क्रियाऽपि द्विविधा परिणामलक्षणा प्रस्पन्दलक्षणा

---

१. युक्तिदीपिका, सांख्यकारिका-१३

२. तदेव

च। परिणामलक्षणया सहकारिभावान्तरानुगृहीतस्य धर्मिणः पूर्वधर्मात्प्रच्युतिः। प्रस्पन्दलक्षणा प्राणादयः कर्मेन्द्रियवृत्तयश्च वचनाद्याः बाह्यानां द्रव्याणामुत्पतननिपतनभ्रमणादीनि इति। तमोगुणस्य स्वभावस्तु गुरुः तथा अवरोधकः- "गुरुवरणकमेव तमः"[१] इति। यत्किञ्चिद् गौरवं वरणं चोपलभ्यते तत्तमोरूपमिति प्रत्यवगन्तव्यम्। तत्र गुरुत्वं कार्यस्याधोगमन-हेतुर्धर्मः करणस्य वृत्तिमन्दता इति। अर्थात् पदार्थस्याधोगमनहेतुभूतधर्म एव गुरुत्वमिति कथ्यते। वरणमपि कार्यगतञ्च द्रव्यान्तरतिरोधानमिति। अर्थात् यस्मात् कारणात् इन्द्रियाणां व्यापारेषु मन्दता आयाति तथा अन्यद्रव्याणां तिरोहितं यः करोति तं वरणम् इति कथ्यते। तमोगुणस्य वृद्धिप्राप्ते सति इन्द्रियेषु यत् शिथिलतारूपायाः अशुद्धेः उत्पन्नं भवति, तत्तु तमसः आधिक्यकारणाज्जायते, तथा सत्त्वगुणस्य प्रकाशनधर्मस्य विरोधी वर्तते। यथोक्तं युक्तिदीपिकाकारेण- "करणगता चाशुद्धिः प्रकाशप्रतिद्वन्द्वीभूता"[२] इति।

उर्ध्वोक्तविवरणात् स्पष्टं जायते यत्- कारिकायां तथा युक्तिदीपिकायां गुणत्रयाणां स्वरूपैः सह कार्यस्य कार्यविधेश्च चर्चाऽपि उपलभ्यते। सत्त्वगुणस्य कार्यन्तु वस्तूनां प्रकाशनम्, रजोगुणस्य कार्यन्तु प्रवर्तितम् अपि च तमोगुणस्य कार्यन्तु नियमनमिति- "...प्रकाशप्रवृत्तिनियमार्थाः"[३] इति। एवं तु स्वरूपकथनेन सहैवोक्तम्। सम्प्रति तेषां गुणानां कार्यविधेः अर्थात् व्यापारविधेः विवेचनं क्रियते निम्नरूपेण। सांख्यकारिकाकारेण व्यापारविधिविषये कथितम्- "अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः"[४] इति। अर्थात् सत्त्वरजस्तमगुणास्तु परस्परपरस्पराभिभूताः, आश्रिताः अपि च परस्परपरिणामे संयोगिनः सहचारिनः च वर्तन्ते। कारिकास्थितस्य 'वृत्तिः' शब्दस्यार्थस्तु 'क्रिया' इति क्रियते। यस्याभिभवस्तु आश्रयादिविशेषणचतुष्टयैः सह सम्बन्धः स्यात्। सत्त्वादिषु कोऽप्येकगुणस्तु स्वस्य धर्माधर्मनिमित्तकसुखादिरूपप्रयोजनबलात् स्वकार्यजननोन्मुखभूत्वा स्वभिन्नगुणौ अभिभूतं करोति। एतदेव अन्योन्याभिभववृत्तिः कथ्यते।

पुनश्चोच्यते सत्त्वादिगुणेषु 'अन्योन्याश्रयवृत्तिः' इति नैव घटितुं शक्यते। यतोहि प्रकृतेः सत्त्वादिस्वरूपयुतत्वात् एतेषु आधार-आधेयभावस्तु सम्भवो नास्ति। इत्याशङ्कायामेव ह्युच्यते यस्यापेक्षायाः यस्य क्रिया भवति स एव तस्याश्रयो वर्तते। अर्थात् यस्यां क्रियायां सहकारिरूपेण यं ग्रहणं क्रियते, स एव सहकारी तस्य

---

१. युक्तिदीपिका, सांख्यकारिका-१३
२. तदेव
३. सांख्यकारिका-१२
४. युक्तिदीपिका, सांख्यकारिका-१३

सहकार्यस्याश्रयः कथ्यते। यथा सत्त्वगुणस्तु रजस्तमसोः प्रवृत्तिः नियमनञ्च कार्यं स्वसहकारीरूपेण स्वीकृते सति स्वप्रकाशनकार्येण रजोगुणं तमोगुणञ्चोपकारं करोति। शेषगुणानां विषयेऽपि समप्रकारकः एव सहकारिभावोऽवगन्तव्यम्। 'अन्योन्यजननवृत्तिः' इत्यस्यार्थस्तु किमप्येकस्य गुणस्य शेषगुणद्वयोः अपेक्षायाः कार्योत्पादनमिति। उपर्युक्ते पदे 'जनन' इति शब्दस्तु गुणानां सदृशस्य परिणामस्य वाचको भवति। उक्तपरिणामस्तु अहेतुको भवति। तथा अनित्योऽपि भवति। यतोहि परिणामस्तु प्रलयकाले सदैव भवत्येव। 'अन्योन्यजननवृत्तिः' इति पदस्य सदृशः परिणामः इत्यस्य स्वरूपार्थकथने सति पुनरुक्तिदोषस्य सम्भावना नैव भवितुमर्हति। यतोहि अन्योन्याश्रयवृत्तिः इति पदमपि समानमर्थं प्रकटयति। किन्तु तत्र तु विसदृशपरिणामस्य द्योतको भवति।

**गौडपादभाष्ये प्रतिफलितं गुणस्वरूपम्**

सत्त्वरजस्तमोगुणास्तु क्रमानुसारं प्रीति-अप्रीति-विषादस्वरूपञ्च स्यात्। एतेषु गुणत्रयेषु सत्त्वगुणस्य कार्यन्तु प्रकाशकरणमिति। अर्थात् सत्त्वगुणो हि रजस्तमसी अभिभूतं कृत्वा स्वस्य घट-पटादेः प्रकाशात्मककार्यं सम्पन्नं करोति। यतोहि घट-पटादिविषयानां प्रकाशनमेव हि सत्त्वगुणस्य प्रयोजनं वर्तते। विविधेषु कार्येषु प्रवृत्तिरुपपन्नं तु रजोगुणस्य प्रयोजनं भवति। कार्याश्रयिव्यक्तिं विश्रामार्थम् अवरोधकं तु तमोगुणस्य प्रयोजनं वर्तते। एते गुणाः स्वस्य द्विविधकार्यं सम्पन्नार्थं परस्पर-परस्परं स्वव्यतिरिक्तमन्यगुणमभिभूतं करोति। तत्र तस्याभिभवस्तु व्यापारः इति कथ्यते। यथा सत्त्वगुणः रजस्तमसी अभिभूय स्वस्य प्रकाशात्मककार्यं करोति। एवं हि रजोगुणः सत्त्वतमसी अभिभूय स्वस्य प्रवृत्तिरूपकार्यं सम्पादयति। एवं च तमोगुणः सत्त्वरजसी अभिभूय स्वस्य नियमनकार्यम् अर्थात् प्रवृत्तिप्रबन्धकार्यं सम्पादयति। अतः गुणानान्तु अभिभवरूपव्यापारो भवति।

प्रत्येकेषां गुणानां स्वकार्यसम्पादने अपरगुणद्वयोः साहाय्येण प्रयोजनं सम्पूरयति। अतो ह्युच्यते 'अन्योन्याश्रयवृत्तिः' इति। प्रत्येकगुणास्तु अपरगुणद्वयमभिभूय जननकार्यं सम्पादयति, अतः उच्यते 'अन्योन्यजननवृत्तिरिति'। यथा हि संसारे स्त्री-पुरुषौ मिलित्वा पुत्रादिकमुत्पादयति, तथैव हि गुणानां मिथुनीभूतकार्ये सृष्टिरूपं कार्यमुत्पन्नं भवति। सम्प्रति गुणत्रयाणां प्रयोजनं लक्षणञ्चोक्तम्- 'सत्त्वं लघुप्रकाशकम् ...' इति। अर्थात् सत्त्वगुणस्तु लघुः प्रकाशकश्च वर्तते। अर्थात् शरीर-मस्तिष्कयोः तथा इन्द्रियादीनां लघुवृत्तित्वं सम्पादयति। घट-पटादीनां सर्वविषयाणां प्रकाशकत्वं वर्तते सत्त्वगुणकारणादिति। सत्त्वगुणस्याधिक्ये सति इन्द्रियाणि झटित्येव विषयाणां ग्रहणं कुर्वन्त्येव। अतोहि

सत्त्वरूपं तु लघुत्वं प्रकाशकत्वञ्च मन्यते। अर्थात् लघुत्वं प्रकाशकत्वञ्च वर्तते सत्त्वस्य लक्षणे। अथ रजोगुणस्तूपष्टम्भकम् अर्थात् प्रवृत्तिकारणं तथा चलनात्मकोऽपि च क्रियान्वितः स्यात्। अतः उपष्टम्भकत्वं वा प्रवर्तकत्वमपि च सक्रियत्वं तु रजोगुणस्य लक्षणमिति। अथ तमोगुणस्तु शरीरेन्द्रियमस्तिष्कादिषु गुरुत्वस्य कारणम्, तथा कार्यस्यावरोधकस्य कारणं मन्यते। यतोहि शरीरादिषु गुरुत्वम्, तथा कार्यमात्रे अवरोधकत्वं तु आलस्यजन्यमेव भवति। आलस्यस्य कारणन्तु तमोगुणः एव भवति। अतः गुरुत्वं प्रतिबन्धकत्वञ्च तमोगुणस्य लक्षणं वर्तते। एते गुणास्तु प्रदीपवत् मिलित्वा प्रकाशरूपं कार्यं सम्पादयन्ति।

**तत्त्वकौमुदीटीकायां प्रतिफलितं गुणस्वरूपम्**

श्रीमद्वाचस्पतिमिश्रविरचिते तत्त्वकौमुदीटीकायां के त्रयो गुणाः? किञ्च तेषां लक्षणमिति विषये वैशद्येन आलोचना कृतास्ति। तत्र तत्त्वकौमुदीटीकायां 'गुणः' इति शब्दस्यार्थः क्रियते परार्थः प्रतिपादकश्च। तद्यथा- "गुणाः इति परार्थाः"[१] इति। अर्थात् यः खलु परार्थस्योपकारसाधनं करोतीति। कस्योपकारसाधनं करोतीति प्रश्ने सति उत्तरं प्रदीयते अन्योन्यस्योपकारसाधनं करोतीति। सत्त्वस्य कार्यं प्रकाशत्वम्, रजसः क्रियाकारित्वम्, तमसः आच्छादनत्वमिति। एतानि अन्योन्यमभिभूतं कृत्वा अर्थात् एको गुणस्तु अपरगुणद्वयौ अभिभूतौ कृत्वा सति स्वकीयकार्यसाधनं करोति। एते गुणास्तु परस्परनिर्भरशीलाः परस्परपरिणामहेतवः अपि च परस्परमिथुनवृत्तयः। सत्त्वस्य स्वभावस्तु प्रीतिः अर्थात् सुखमिति। यतोहि सुखमस्तीति प्रत्यक्षसाध्यं स्यात्। 'आत्मा' इति शब्दस्तु भावरूपः अर्थात् सत्तायाः वाचको भवति। आत्मशब्दं प्रयोगं कृत्वा कारिकाकारेण बोध्यते यत्- प्रीतिरात्मा भावो येषां ते प्रीत्यात्मकः। अप्रीतिरात्मा भावो येषां ते अप्रीत्यात्माकः। विषादात्मा भावो येषां ते विषादात्माकः इति। अन्योन्यस्य अभावे कल्पिते सति अन्योन्याश्रयदोषो भवति। अथ हि गुणत्रयाणां स्वरूपकथनादनन्तरं तेषां प्रयोजनमाह- 'प्रकाशप्रवृत्तिनियमार्थाः' इति। सत्त्वगुणस्य प्रयोजनन्तु प्रवृत्तिरिति। तमोनियतन्तु क्वचिदेव प्रवर्त्तयतीति भवति नियमार्थम्। प्रयोजनमुक्त्वा गुणानां क्रियामाह- 'अन्योन्याभि- भवाश्रयजनन-मिथुनवृत्तयश्चेति' अत्र वृत्तिः नाम क्रिया। सा च प्रत्येकमभिसम्बध्यते। 'अन्योन्याभिभववृत्तयः इति'। सत्त्वगुणः रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते। एवं रजो गुणः सत्त्वतमसी अभिभूय घोराम् एवं च तमः सत्त्वरजसी अभिभूय मूढामिति वृत्तिं लभते। अन्योन्याश्रयवृत्तयः। यद्यपि

१. तत्त्वकौमुदी, सांख्यकारिका-१२

आधाराधेयभावेन नाश्रयार्थो घटते, तथापि यदपेक्षया यस्य क्रिया स तस्याश्रयः। तथा हि सत्त्वं प्रवृत्तिनियमौ आश्रित्य रजस्तमसोः प्रकाशेनोपकरोति, रजः प्रकाशनियमौ आश्रित्य प्रवृत्ति-इतरयोः, तमः प्रवृत्ती आश्रित्य नियमेनेतरयोरिति। अन्योन्यजननवृत्तयः। अन्यतमोऽन्यतमं जनयति। जननञ्च परिणामः, स च गुणानां सदृशरूपः। अतएव तत्त्वान्तरस्य हेतोः अभावात् न हेतुत्वम्। तत्त्वान्तरे लयाभावात् नापि अनित्यत्वमिति। अन्योन्यमिथुनवृत्तयः। अन्योन्य- मिथुनवृत्तिप्रसङ्गे तत्त्वकौमुदीकारेण श्लोकाकारेण वर्ण्यते-

**"अन्योऽन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः।**
**रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः॥**
**तमसश्चापि मिथुने ते सत्त्वरजसी उभे।**
**उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते।**
**नैषामादिः सम्प्रयोगो वियोगो नोपलभ्यते॥"[1]**

गुणत्रयाणां प्रकाशप्रवृत्तिनियमार्थाः कथनादनन्तरं तत्र के ये इत्थम्भूताः? कुतः च इत्यत आह-सत्त्वमिति। सांख्याचार्याणामभिमतन्तु सत्त्वगुणः एव लघु-प्रकाशकञ्च। तत्र कार्योद्गमने हेतुरूपधर्मं लाघवमुच्यते, तत्तु गौरवस्य प्रतिद्वन्द्वी स्यात्। गुरुः अर्थात् तमोगुणः, यस्मात् स्वभावात् व्यक्तेः मूढवृत्तिः प्रकाश्यते, तदेव गुरुसत्ता। रजस्तु स्वयं चलस्वभावः अपरमपि चालनक्षमं वर्तते। एवमेव गुणत्रयम् एकत्रिते सति प्रदीपज्वलनवत् कार्यं करोति। तत्त्वकौमुदीकारस्य वक्तव्यं वर्तते यत्- एवमेव हि गुणाः खलु परस्परविरूद्धं भूत्वापि सर्वदा ते गुणाः मिलित्वा सति जननकार्यं कुर्वन्तीति शम्।

**मुख्यग्रन्थाः**


- सांख्यकारिका(ईश्वरकृष्णः), ज्वालाप्रसाद गौड्(सम्पादकः), चौखम्बा विद्याभवन, वाराणसी, संस्करण २०१६
- सांख्यकारिका(ईश्वरकृष्णः), थानेश चन्द्र उप्रेति(सम्पादकः), चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली, पुनर्मुद्रित संस्करण २०११
- सांख्यकारिका(ईश्वरकृष्णः), राकेश शास्त्री(सम्पादकः), संस्कृत ग्रन्थागार, दिल्ली, संस्करण २०१७
- सांख्यकारिका(ईश्वरकृष्णः), सत्कारि शर्मा वङ्गीय(सम्पादकः), चौखम्बा


१. तत्त्वकौमुदी, सांख्यकारिका-१२

संस्कृत सिरिज आफिस, वाराणसी, तृतीय संस्करणम् १९९४

- सांख्यकारिका(ईश्वरकृष्णः), सुधांशु कुमार षडङ्गी(सम्पादकः), चौखम्बा सुरभारती प्रकाशन, वाराणसी, संस्करण २०१६
- सांख्यतत्त्वकौमुदी(वाचस्पतिमिश्रः), रामशङ्कर भट्टाचार्य(सम्पादकः), मोतीलाल बनारसी दास, दिल्ली, द्वितीय संस्करण १९७६, पुनर्मुद्रण २०१०
- सांख्यदर्शनम्(कपिलमुनिप्रणितम्), उदयवीर शास्त्री(सम्पादकः), विजयकुमार गोविन्दराम हासानन्द, दिल्ली, संस्करण २०१७
- सांख्यदर्शनम्(कपिलमुनिप्रणितम्), गजाननशास्त्री मुसलगाँवकर(सम्पादकः), चौखम्बा संस्कृत संस्थान, वाराणसी, १मसंस्करण १९८७
- सांख्यसूत्रम्(कपिलप्रणीतम्), रामशङ्कर भट्टाचार्य(सम्पादकः), भारतीय विद्या प्रकाशन, वाराणसी, वि.सं २०२२

**गौणग्रन्थाः**

- द्विवेदी, विन्ध्येश्वरीप्रसाद, सांख्यसंग्रहः, चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, द्वितीयसंस्करण १९६९
- वात्स्यायन, लीलाधर, सांख्यकारिका की युक्तिदीपिका टीका, परिमल पब्लिकेशन्स, दिल्लि, १मसंस्करण २००२
- शास्त्री, उदयवीर, प्राचीन सांख्य संदर्भ, विजयकुमार गोविन्दराम हासानन्द, दिल्ली, संस्करण १९९७
- शास्त्री, उदयवीर, सांख्यदर्शन का इतिहास, विजयकुमार गोविन्दराम हासानन्द, दिल्ली, संस्करण २०१२

*****

 ISSN 2278-0416

# विभक्तिविमर्शः

*डॉ. सुधाकरमिश्रः

**सुविशालं निजं देशं विशालां संस्कृतिं निजाम्।**
**विशालं निजसाहित्यं भूयो भूयो नमाम्यहम्॥**

पदसमयपरिपालनाय व्याकरणं प्रवृत्तमिति वदता वात्स्यायनेन स्पष्टमेव व्याकरणबोध्योऽर्थ ऐश्वरसमयविषय इत्युक्तम्। तस्माद् "ब्राह्मणेन निष्कारणः धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति श्रुतेर्प्रमाणत्वात्।

**पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।**
**सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥**

पराशरोपपुराणाच्च। साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिरित्यभियुक्तेश्च। उक्त वात्स्यायनोक्तेश्च। शक्तिग्रहं व्याकरणोपमानेत्यादिना वृद्धैर्व्याकरणस्य शक्तिग्राहकतोक्तेश्च शब्दशब्दार्थज्ञानस्य वास्तविकरूपेण व्याकरणाधीनत्वात् तदङ्गभूतविषयो विभक्तिविमर्शः क्रियते। वाक्यार्थज्ञाने पदार्थज्ञानं कारणमिति नियमात् सर्वप्रथमं विभक्तिपदं विचार्यते। तत्र प्रकृतिप्रत्यययोविचारस्तु इत्थम्- वि उपसर्गपूर्वको भज्धातुः भावार्थकक्तिन् प्रत्यये सति विभक्तिशब्दो निष्पद्यते। द्वितीयतः वि उपसर्गपूर्वक भज् विश्राणने धातोः "स्त्रियां क्तिन्"[1] इति सूत्रेण करणे क्तिन् प्रत्यये कृते अनुबन्धलोपे सति वि भज् ति इति स्थिते। पुनः "खरि च"[2] इति सूत्रेण चर्त्वे, जकारस्य चकारे, "चोः कुः"[3] इति सूत्रेण कुत्वे सति विभक्तिकार्ये जाते विभक्तिपदं सिध्यति। यद्यपि अस्य धातोः नैके अर्थास्सन्ति यथा- दानं, पाकः, सिद्धकरणे, पार्थक्ये च। तेषु प्रकरणानुयायी अर्थः पृथक्करणमत्र गृह्यते। इदं विभक्तिपदं स्वरूपेणार्थप्रतिपादकत्वेन च पार्थक्यकरणार्थं

---

* सह-आचार्यो व्याकरणविभागे, श्रीसीतारामवैदिकादर्शसंस्कृतमहाविद्यालयः, कोलकाता- ७०००३५, मो.- ८६१७७६३९३५/९१०३५६२८५३, Email- sudhakarmishra.vyakaran@gmail.com

१. पा.सू.३.३.९४
२. पा.सू.८.४.५५
३. पा.सू.८.२.३०

बोधयति। विभज्यते अनयेति करणसाधनपरकव्युत्पत्तिरेव औचित्यं निर्वहति। तस्य विभक्तिपदस्य परिभाषा शास्त्रेषु इत्थं प्राप्यते

**भावघञन्तपक्षे विग्रहस्तु इत्थम्**

१.विशिष्टो विभागः विभक्तिः।

२.विभजनं विभक्तिः।

३.विभज्यते इति विभक्तिः इति।

**करणघञन्तपक्षे विग्रहस्तु इत्थम् -**

१. विभज्यते अनया इति विभक्तिः।

२. संख्यात्वावारन्तरजात्यवच्छिन्नशक्तिमान् यः प्रत्ययः, स विभक्तिसंज्ञकः।

३. संख्याकर्मादयो ह्यर्था आभिर्विभज्यन्ते इति विभक्तयः।

४. पञ्जीकातन्त्रे प्रतिपादितमस्ति यत् विभज्यन्ते विभागशः प्रकाश्यन्ते कर्तृकर्मादयोर्था आभिरिति विभक्तयः।

५. आचार्यमकरन्दः प्रतिपादयति यत्- संख्या अर्थो विभज्यन्ते अनया इति विभक्तिः।

६. विभज्यते अनया प्रातिपदिकार्थ इति विभक्तिः।

इयं विभक्तिः नाट्यशास्त्रेपि वर्णिता अस्ति यथा-

**एकस्य बहूनां वा धातोर्लिङ्गस्य पदानां वा।**
**विभजन्त्यर्थं यस्माद् विभक्तिस्तेन ताः प्रोक्ताः॥**[१]

अर्थस्तु इत्थं एकस्य अनेकेषां वा धातूनां, प्रातिपदिकानाम् अथवा पदानामर्थविभागो भवति अनया सा विभक्तिरिति। परन्त्वत्र किमपि साक्षान्निर्देशं न कृतवान् नाट्यकारो भरतमुनिः। अत्र धातुः प्रातिपदिकं वा इति तेन प्रोक्तम्।

शब्दशक्तिप्रकाशिकाकारोपि किमपि लिखति यत्-

**संख्यात्वव्याप्यसामान्यैः शक्तिमान्प्रत्ययस्तु यः।**
**सा विभक्तिर्द्विधा प्रोक्ता सुप्तिङ् चेति प्रभेदतः॥**[२]

अत्र जगदीशतर्कालङ्कारः स्वन्यायशास्त्ररीत्या संख्यात्वव्याप्यसामान्यैरित्युक्तम्। पुनः श्रीहर्षः नैषधे वदति-

**क्रियते चेत् साधुविभक्तिचिन्ता व्यक्तिस्तदा सा प्रथमाभिधेया।**
**या स्वौजसां साधयितुं विलासैस्तावत्क्षमानाम पदं बहुस्याम्॥**[३]

---

१. भरतनाट्यशास्त्रम्

२. शब्दशक्तिप्रकाशिका

३. नैषधचरितम्

पाणिनीयव्याकरणे विभक्तिसंज्ञाविधायकं सूत्रद्वयमाचार्येण पाणिनिना विहितम्। प्रथमं सूत्रं "विभक्तिश्च"[१] द्वितीयं च "प्राग्दिशो विभक्तिः"।[२] पाणिनिव्याकरणं शब्दानुशासनमपरं नामधेयम्। स शब्दः सुबन्ततिङन्तभेदेन द्विधा। अत्र प्रकरणे विभक्तिपदेन उभयोर्ग्रहणं प्रसिद्धम्। तथापि सुप्प्रत्ययानामेव ग्रहणं विशिष्टरूपेण भवति। तं प्रत्ययमेवाधिकृत्य नाना प्रकरणानि प्रसिद्धानि सन्ति यथा- सुबर्थनिर्णयः, विभक्त्यर्थप्रकरणम्, कारकप्रकरणम्, कमलाकरभट्टः विभक्त्यर्थप्रकाशः, गिरिधरभट्टाचार्यस्य विभक्त्यर्थनिर्णयः, प्रोक्तञ्च तत्रैव इह खलु सर्वेषां विभक्त्यर्थानां भवत्यन्वयः इति विभक्त्यर्थो निरूप्यते। तत्र कारकाकारकभेदात्सा द्वेधा इति। तिङ्प्रत्ययानां शास्त्रतः विभक्तिसंज्ञा सत्वेपि सुब्वत् प्रसिद्धेरभावात्। पाणिनिसूत्रेष्वपि सुबर्थे एव विभक्तिपदस्य बाहुल्येन प्रयुक्तत्वाभावात्। यथा १. अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्यया- सम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्य सादृश्यसम्पत्तिसाकल्यान्तवचनेषु[३] २. प्राग्दिशो विभक्तिः[४] ३. सावेकाचस्तृतीयादिर्विभक्तिः[५] ४. इकोऽचि विभक्तौ[६] ५. अष्टन आ विभक्तौ[७] ६. पञ्चमी विभक्ते[८] ७. प्रातिपदिकान्तनुम्विभक्तिषु च[९] ८. न विभक्तौ तुस्माः[१०] आचार्यपतञ्जलिरपि "तद्धितश्चासर्वविभक्तिः"[११] इति सूत्रे विभक्तिपदेन सुप्मात्रस्यैव ग्रहणमकरोत्। कानिचन अव्ययेषु विभक्त्यर्थस्य सुबर्थस्य प्राधान्यमभीष्टम्, यथा- उच्चैः, नीचैः। कुत्रचित् क्रियाप्राधान्यं विवेचितम्, यथा नाना, विना, हिरुग्, पृथगिति। अव्ययविशिष्टानि तद्धितरूपाण्यपि विभक्त्यर्थप्रधानानि भवन्ति। यथा यत्र, तत्र, अतः।

**विशेषविचारः**- प्रथमं सूत्रं "विभक्तिश्च" अनेन सुप्प्रत्याहारविशिष्टानां एकविंशतिसंख्याकानां प्रत्ययानां, तथा च लस्थानिकानामादेशविशिष्टानां तिङाख्यमष्टादशानाञ्च विभक्तिसंज्ञा भवति। एते प्रत्ययाः पदसृजनार्थं शब्दस्वरूपनिर्माणार्थञ्च नीताः

---

१. पा.सू.१.४.१०४
२. पा.सू.५.३.१
३. पा.सू.२.१.६
४. पा.सू.५.३.१
५. पा.सू.६.१.१६
६. पा.सू.७.१.७३
७. पा.सू.७.२.८४
८. पा.सू.२.३.४२
९. पा.सू.८.४.११
१०. पा.सू.१.३.४
११. पा.सू.१.१.३८

भवन्ति। यथा सुप्, तिङ् इति। विभक्तिश्च इति सूत्रे "सुपः"[1] सूत्रात् सुब्ग्रहणम्, "तिङस्त्रीणि"[2] इति सूत्रात् तिङ्ग्रहणञ्चानुवर्तते। प्रथमया विपरिणम्यते। तदाह सुप्तिङौ विभक्तिसंज्ञौ स्तः। अत्र सुबिति सुपः पकारेण तिङ्ङिति महिङो ङकारेण प्रत्याहारः। प्रत्यासन्नत्वान्न तु कपः पकारेण। विप्रकृष्टत्वात्। सप्तम्या बहुवचनस्यापि न, तिङ्साहचर्येण स्वरूपाग्रहणात्। ननु प्रत्याहारग्रहणे प्रत्येकमेव विभक्तिसंज्ञा स्यात्प्रत्येकं सुप्संज्ञासत्वात् च प्रथमयो पूर्वसवर्णः इत्यत्र औ जसोरेव ग्रहणं स्यान्न तु प्रथमाद्वितीययोरतस्त्रीणि त्रीणीत्यनुवर्त्य त्रयाणामेव विभक्तिसंज्ञा विधेया। एवं सति प्रथमयोरित्यनेन प्रथमाद्वितीय- योर्ग्रहणमपि सिध्यति। पाणिनिसूत्रानुसारेण एतत्प्रत्ययान्तानां पदसंज्ञापि भवति। पदसंज्ञा- विधायकं सूत्रं सुप्तिङन्तं पदमिति। एतेष्वपि तिङ्प्रत्ययाः आदेशभूताः प्रत्यया भवन्ति। कारणमेते लकारस्य स्थाने आगच्छन्ति। एतेषां विभक्तिसंज्ञा विधानस्य प्रयोजनं 'न विभक्तौ तुस्माः' इति। महाभाष्यकारः महाभाष्ये प्राग्दिशो विभक्तिरिति सूत्रे पृच्छति विभक्तिसंज्ञायाः प्रयोजनं किमिति। तथा च महाभाष्यम्- विभक्तित्वे किं प्रयोजनम्? विभक्तित्वे प्रयोजनमित्प्रतिषेधः। विभक्तित्वे इत्प्रतिषेधः प्रयोजनम्। न विभक्तौ तुस्माः इतीत्प्रतिषेधः सिद्धो भवति। यद्येवं किमोऽत्, क्व प्रेप्सन् दीव्यसे। क्वार्द्धमासाः, अत्रापि प्राप्नोति। तौ चोक्तम्। किमुक्तम्? विभक्तौ तवर्गप्रतिषेधोऽतद्धित इति। इदमो विभक्तिस्वरश्च। इदमो विभक्तिस्वरश्च प्रयोजनम्। इतः। इह। इदमस्तृतीयादिविभक्तिरुदात्ता भवतीत्येष स्वरः सिद्धो भवति। त्यदादिविध यश्च। त्यदादिविधयश्च प्रयोजनम्। इतः। यतः। यत्र। कुतः। कुत्र। विभक्ताविति त्यदादिविषयः सिद्धा भवन्ति। अनेन भाष्येण सिद्धमिदं यत् इत्संज्ञानिषेधः, विभक्तिस्वरः, त्यदादिविधिश्च प्रयोजनम्। विभक्तिश्च सूत्रे विशिष्टो विचारस्त्वित्थम्- सूत्रार्थो यथा- सुप्तिङौ विभक्तिसंज्ञौ स्तः। सूत्रेऽस्मिन् तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः इति सूत्रात् त्रीणि त्रीणि इति पदमनुवर्तते। यदि त्रीणि इति पदमागच्छति तदा किं त्रयाणां त्रयाणां एककाले एव विभक्तिसंज्ञा भवति अथवा एकस्य एकस्य वा। उभयत्र दोषः यथा- यदि त्रीणि इति पदमनुवर्तते तदा "अष्टन आ विभक्तौ" इति सूत्रेण आत्वं न स्यात् यतो हि त्रयाणामेककालेन उपस्थित्यभावात्। "अष्टन आ विभक्तौ" इति सूत्रेण विध ीयमानं यच्च कार्यं तत्तु हलादौ विभक्तौ अष्टन आत्वं भवति। यदि त्रीणि इत्यनुवर्तते तदा त्रयाणाम् यदि उपस्थितिर्भवेच्चेत् तदैव, त्रयाणां सहैव कदापि उपस्थित्यभावात्।

१. पा.सू.३.४.१०३
२. पा.सू.१.४.१०१

यदि नानुवर्तते तदा "प्रथमयोः पूर्वसवर्णः"[1] इति सूत्रेण प्रथमद्वितीययोः सम्पूर्णयोः ग्रहणं भवति यदि त्रीणि इत्यनुवर्तते तदा एव तस्यार्थसंगतिर्भवति नान्यथा। तर्हि किं कर्तव्यम्। इति विचारे महाभाष्यकारः कथयति यत् यथेच्छसि तथाऽस्तु। तर्हि अनुवर्तते यदि अनुवर्तते तदा "अष्टन आ विभक्तौ" इति न सिध्येत्। तदा उत्तरयति यद् वचनसामर्थ्यात् भविष्यति। यदि त्रीणि इति निवर्तते तदा "प्रथमयोः पूर्वसवर्णः" प्रत्यययोरेव ग्रहणं न प्राप्नोति तदा उत्तरयति यत् इको यणचि (पा.सू.६.१.७७) इति सूत्रात् अचीत्यनुवर्तते। न चाऽजादी प्रथमौ प्रत्ययौ स्तः। यदि एवमर्थः क्रियते अजादि यौ प्रत्ययौ, अथवा अजादीनां यौ प्रथमौ। एवमर्थकरणे "तस्माच्छसो नः पुंसि" (पा. सू.६.१.१०३) तस्यार्थो भवति कृतपूर्वसवर्णदीर्घात् परो यः शसः सकारस्तस्य नः स्यात्पुंसि। तस्माच्छसो नः पुंसीत्यनुक्रान्तं पूर्वसवर्णदीर्घं प्रतिनिर्दिशति तज्ज्ञापयत्याचार्यो विभक्त्योर्ग्रहणमिति। तेन एकस्य एकस्यापि विभक्तिसंज्ञा भवति। यदि एवं न स्यात् तदा प्रथमयोः पूर्वसवर्णः इति सूत्रस्य स्थाने नवीनं वचनं स्यात् "औजसोः पूर्वसवर्णः" इति। आहत्य त्रीणि इति पदमनुवर्तते। पुनः विचार्यते- "प्राग्दिशो विभक्तिः" इति सूत्रे न्यासकारः लिखति यत् विभक्तिरित्येष शब्दः संज्ञा येषां ते विभक्तिसंज्ञा इति। स च विभक्तिशब्दः सुप्तिङां संज्ञा, प्रोक्तञ्च विभक्तिश्च इति सूत्रे सुप्तिङौ विभक्तिसंज्ञौ स्तः। तर्हि शाब्दबोधस्य नियमोऽयं यत् यच्च संज्ञासूत्रम् तस्मिन् देशे उच्चरिता या संज्ञा तत्रैव उच्चरितो यः संज्ञी सा संज्ञा तस्यैव संज्ञिनः बोधं कारयति। यथा "वृद्धिरादैच्"[2] इत्यत्र वृद्धिसंज्ञा, आ ऐ औ एते वर्णाः संज्ञिनः। संज्ञा च प्रदेशवाक्येषूच्चारिता संज्ञिनं प्रत्याययतीति सुप्तिङामेव संज्ञात्वं प्राप्नोति, न विभक्तिशब्दस्य स्वाभिधेये गुणीभूतस्य? नैष दोषः। एवं सति सुप्तिङां विभक्तिसंज्ञाविधानमनर्थकं स्यात्। यथा वृद्धिशब्दः स्वाभिधेये लौकिकेऽर्थे गुणभूतोऽप्यादैच् प्रति संज्ञात्वमनुभवति, तथा विभक्तिशब्दोऽपि तसिलादीन् प्रति संज्ञात्वेन वेदितव्यः। पुनर्विचार्यते यत् व्याकरणशास्त्रीयविभक्तिसंज्ञाविधायकयोः सूत्रयोः स्थाने एकमेव सूत्रं कथं न लिख्यते "सुपो विभक्तिश्च प्राग्दिशश्च" एवं सति पुनर्विभक्तिग्रहणं कर्त्तव्यं न भवति। तदा उत्तरयति यत् नैवं सम्भवति एवं हि न्यासे सति कुत आरभ्य प्राग्दिशीया इति न ज्ञायते। किञ्च दिगादिभ्यो यत् तेनैकदिक् इति चानेकं शास्त्रे दिग्ग्रहणमित्यवधिरपि सन्दिह्येत। किंसर्वनामबहुभ्यः इत्येवमादेश्च कार्यस्यावधिदर्शनार्थं पुनरिह प्राग्दिशः

१. पा.सू.६.१.१०२
२. पा.सू.१.१.१

इति वाच्यमेव स्यात् तस्मात् यथासूत्रं द्वयमेव साधुरिति।

शेखरकारः पुनर्जिज्ञास्यते यत् विभक्तिश्च इति सूत्रस्य किं प्रयोजनम्? यतो हि विभक्तिमधिकृत्य निमित्तत्वेन उद्देश्यत्वेन वा यच्च विधेयं प्राप्तं तत्र सर्वत्र सुप्तिङ् ग्रहणं कर्तव्यम्। यथायोग्यस्थले सुप् तिङ् वा ग्रहणं कृत्वा सम्पूर्णमपि कार्यं सिध्यति पृथग्रूपेण विभक्तिश्च इति सूत्रेण किं प्रयोजनमिति प्रश्नः। तस्योत्तरं ददन् लिखति महामहिमनागेशभट्टः उपर्युक्तस्वरूपस्वीकारे यत्र तत्रादि प्रयोगेषु त्यदादित्वं न स्यात्। यत् तत् आदि शब्दानामग्रे ङि ओस् सुप् आदिस्थलेषु यदि त्रलादेशस्स्यात् तदा त्यदादीनामः इत्यादिसूत्राणां प्रवृत्तिर्न स्यात्। कश्चन उपायान्तरं ब्रवीति यत् सुपादिस्थान-सम्पन्नस्य त्रलादिप्रत्ययादिकमधिकृत्य विभक्तिं मत्वा त्यदादिसिध्यति तदा शेखरकारः उत्तरयति यत् त्रल् र्हिल दादि प्रत्ययानां सुप्स्थाने आदिष्टानां प्राग्दिशीयव्यवहारो भवति यदि प्राग्दिशीयाः सुप् भविष्यन्ति तदा नाना दोषाः समापतन्ति यथा-

१. एतर्हि प्रयोगे र्हिल् यदि सप् स्यात्तदा स यञादि स्यात्तदा सुपि च इति सूत्रेण तकारोत्तरवर्तिनः अकारस्य दीर्घत्वापत्तिः।

२.यदा कदा इति प्रयोगे दा प्रत्ययोऽपि यदि सुप्स्यात्तदा यदा कदा इत्यादीनां सुबन्तत्वात् "सर्वस्य सुपि" इति सूत्रेण आद्युदात्तत्वापत्तिः स्यात्।

३. ण्यन्तकतरशब्दात् क्विप्प्रत्ययं विधाय सर्वापहारी लोपे सति कतर इति प्रातिपदिकात् पञ्चमीविभक्तौ यदि पञ्चम्यास्तसिल् प्रत्ययो भविष्यति तदा कतर तस् अस्यां परिस्थितौ तसिल् यदि सुप्स्यात् तदा रोःसुपि इति सूत्रविहितनियमप्रवृत्तिस्स्यात् तदा कतरशब्दोत्तररेफस्य विसर्गानापत्तिः स्यात्। सत्वोपि न स्यात्। तदा कतरस्तः इति प्रयोगो न स्यात्। एषापि समस्या समापतेत्।

एतान् दोषान् दृष्ट्वा वयं परिकल्पयामः यत् प्राग्दिशीयाः प्रत्ययाः सुप् पदवाच्याः न भवन्ति। अतः यत्र तत्र इत्यादि स्थले त्यदाद्यत्वार्थं त्रलादीनां विभक्तिसंज्ञा आवश्यकी। तस्योपपत्यर्थं स्थानीभूतसुबादीनां विभक्तिसंज्ञा आवश्यकी। अतः पृथग्रूपेण सूत्रारम्भः करणीयः।

**विशेषविचारः**- द्वितीयं सूत्रं "प्राग्दिशो विभक्तिः" इदं सूत्रं तु "हेतौ च च्छन्दसि"[1] सूत्रपर्यन्तं गच्छति। तन्मध्ये ये ये प्रत्ययाः विद्यन्ते तेषां प्रत्ययानां विभक्तिसंज्ञाः भवन्ति। ते प्रत्ययाः इत्थं सन्ति तसिल् प्रत्ययः, त्रल्प्रत्ययः, थाल्प्रत्ययः, थमुप्रत्ययः, इत्यादयः। अनेन सूत्रेण विहिताः प्रत्ययाः अपदप्रत्यया इति उच्यन्ते। एते

१. पा.सू.५.३.२६

तद्धिताः प्रत्ययास्सन्ति। एते प्रत्ययान्ताः प्रातिपदिकसंज्ञकाः भवन्ति। अत एव एते अपदप्रत्यया इति। अत्र प्रत्ययानां विभक्तिसंज्ञा त्यदादिविधिसम्पादनमेव। तानि च सूत्राणीत्थं सन्ति- "किं सर्वनामबहुभ्योऽद्व्यादिभ्यः"[1] "इदम इश्"[2] "एतेतौ रथोः"[3] "एतदोऽश्"[4] "सर्वस्य सोऽन्यतरस्यां दि"[5] "पञ्चम्यास्तसिल्"[6] "तसेश्च"[7] "पर्यभिभ्याञ्च"[8] "सप्तम्यास्त्रल्"[9] "इदमो हः"[10] "किमोऽत्"[11] "वा ह च च्छन्दसि"[12] "इतराभ्योऽपि दृश्यन्ते"[13] "सर्वैकान्यकिंयत्तदः काले दा"[14] "इदमोर्हिल्"[15] "अधुना"[16] "दानीञ्च"[17] "तदो दा च"[18] "तयोर्दार्हिलौ चच्छन्दसि"[19] "अनद्यतने र्हिलन्यतरस्याम्"[20] "सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युपरपेद्युरधरेद्युरभयेद्युरुत्तरेद्युः"[21] "प्रकारवचने थाल्"[22] "इदमस्थमुः"[23] "किमश्च"[24] "था हेतौ चच्छन्दसि"[25] अत्र यानि यानि सूत्राणि विद्यन्ते तेषु प्रकृतिनिर्देशः प्रत्ययनिर्देशश्च प्राप्यते। यथा सर्व,

१. पा.सू.५.३.२
२. पा.सू.५.३.३
३. पा.सू.५.३.४
४. पा.सू.५.३.५
५. पा.सू.५.३.६
६. पा.सू.५.३.७
७. पा.सू.५.३.८
८. पा.सू.५.३.९
९. पा.सू.५.३.१०
१०. पा.सू.५.३.११
११. पा.सू.५.३.१२
१२. पा.सू.५.३.१३
१३. पा.सू.५.३.१४
१४. पा.सू.५.३.१५
१५. पा.सू.५.३.१६
१६. पा.सू.५.३.१७
१७. पा.सू.५.३.१८
१८. पा.सू.५.३.१९
१९. पा.सू.५.३.२०
२०. पा.सू.५.३.२१
२१. पा.सू.५.३.२२
२२. पा.सू.५.३.२३
२३. पा.सू.५.३.२४
२४. पा.सू.५.३.२५
२५. पा.सू.५.३.२६

किम्, इदम्, एतद्, परि, अभि, इति प्रकृतिः, एताभ्यः प्रकृतिभ्यः तसिल्, तसि, त्रल्, ह, अत्, धुना, एते प्रत्यया भवन्ति। सिद्धान्तकौमुद्यां यस्मिन् प्रकरणे इमानि सूत्राणि विद्यन्ते तस्य प्रकरणस्य नाम "अथ तद्धिते प्राग्दिशीयप्रकरणम्"। इदमपि नाम अन्वर्थप्रकरणम्। प्राग्दिशो विभक्तिः सूत्रस्यार्थस्तु दिक्छब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्ययाः विभक्तिसंज्ञाः स्युः। अथ स्वार्थिकाः प्रत्ययाः। समर्थानाम् इति, प्रथमादिति च निवृत्तम्। वा इति त्वनुवर्तत एव।[1] अस्य सूत्रस्य सीमा "दिक्शब्देभ्यः सप्तमी पञ्चमी प्रथमाभ्यो दिक्देशकालेष्वस्तातिः"[2] पर्यन्तं गच्छति। अस्मिन् मध्ये विहितानां प्रत्ययानां पाणिनिकृत कश्चिदर्थः निर्दिष्टः नास्ति। तस्मात् ते प्रत्ययाः स्वार्थिकाः प्रत्ययाः भवन्ति। स्वार्थिकाः तात्पर्यं विभक्त्यर्थविशिष्टा इति। अस्मिन् प्रकरणे समर्थानाम् पदस्य प्रथमात् पदस्य च प्रयोगाभावात् प्रभावो न भवति। विभक्तिसंज्ञानिमित्तक-कार्यप्रतिपादनाय अस्य प्रकरणस्य प्रत्ययानां संज्ञा विभक्तिसंज्ञा इति। यथा कस्मादिति कुतः। पञ्चम्यर्थे तसिल्। तस्मादिति ततः। एतस्मादिति अतः। अमुष्मादिति अमुतः। कस्मिन्निति कुत्र। तस्मिन् इति तत्र। कस्मिन् इति क्व। अत्र सर्वत्र पञ्चम्यर्थे सप्तम्यर्थे प्रत्ययाः भवन्ति तस्मात् एते प्रत्यया अपि विभक्त्यर्थविशिष्टास्तस्मात् तेऽपि विभक्तिसंज्ञकाः भवन्ति। एतेभ्योऽपि समेभ्यः पुनः पदसाधनार्थकाः प्रत्ययाः अगच्छन्ति। प्रत्ययत्वात् ते लुप्ताः भवन्ति। "ते विभक्त्यन्ताः पदम्"[3] गौतमसूत्रे न्यायवार्तिककारोऽप्याह द्वयी विभक्तिः स्वादयस्तिपादयश्च। तत्र स्वाद्यन्तं नाम, तिवाद्यन्तमाख्यातम्। अभि-धेयस्य क्रियान्तरयोगाद्विशिष्यमाणरूपः शब्दो नाम। यथा ब्राह्मण इति क्रियाकारकसमुदायः कारकसंख्या-विशिष्टः। क्रियाकालयोगाभिधायिक्रियाप्रधानमाख्यातं यथा पचति। अत्र वाचस्पतिमिश्राः- क्रियान्तरं क्रियाविशेषस्तत्सम्बन्धाद्विशिष्यमाणरूपः पर्यवसितार्थः शब्दो नाम। यस्याभिधेयं नियमेन क्रियाविशेषमाकाङ्क्षति तन्नामेति फलितम्। यत्रापि क्रियापदं नास्ति तत्राप्यस्तीत्यस्त्येव। उदाहरणं ब्राह्मणः इति। राज्ञः पुरुष इत्यादौ राज्ञ इत्यादेरपि पुरुषादिद्वारा तदाकाङ्क्षत्वम्।[4]

सुबन्ततिङन्तप्रत्ययान्तानां ऐक्यमपि दृश्यते यथा नामधातुप्रकरणम्। तात्पर्यं नाम प्रातिपदिकम् धातुरूपेण परिवर्तते, यथा पुत्रीयति, आत्मनः पुत्रमिच्छति, राजीयति, गर्गीयति। धातूनां च नामरूपेणापि प्रयोगः प्राप्यते। शब्दस्वरूपमादाय, यथा पचतेः,

१. वैयाकरणसिद्धान्तकौमुदी
२. पा.सू.५.३.२७
३. न्यायसूत्रम् २.२.६०
४. वैयाकरणसिद्धान्तलघुमञ्जूषा तिङर्थनिरूपणम्

भवतेः, इत्यादिः। निरुक्ते दैवतकाण्डे विभक्तिमधिकृत्येत्थं लिखितमस्ति यत्- तास्त्रि-विधा ऋचः। परोक्षकृताः। प्रत्यक्षकृताः। आध्यात्मिक्यश्च। तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य। तत्र परोक्षकृताः मन्त्राः तद्घटितानि सम्पूर्णान्यपि प्रातिपदिकानि तिङन्तस्य प्रथमपुरुषैः सह युक्तानि भवन्ति। प्रत्येकं विभक्तीनामुदाहरणानि यथा- इन्द्रो दिव इन्द्र ईशे पृथिव्याः।[1] इन्द्रो दिवः स्वर्गस्य ईशे, ईष्टे। इन्द्र एव पृथिव्याः ईष्टे। प्रथमायामेतदुदाहरणम्। स्वर्गस्य पृथिव्याश्चेन्द्र एव स्वामीत्यर्थः। इन्द्रमिद् गाथिनो बृहत्।[2] हे गाथिनः! सामगाः! इन्द्रमेव यूयं बृहता साम्ना अभिष्टुत। इन्द्रेणैते तृत्सवो वेविषाणाः।[3] इन्द्राय साम गायत।[4] नेन्द्रदृते पवते धाम किञ्चन।[5] इन्द्रस्य नु वीर्याणि प्र वोचम्। (ऋ.१.३२.१) इन्द्रे कामा असंयत इति। तात्पर्यं अत्रापि निरूक्ते सुबन्तस्य तिङन्तस्य च विभक्तत्वेन व्यवहारः प्राप्यते। अथर्ववेदेऽपि ओंकारं पृच्छामः, को धातुः, किं प्रातिपदिकम्, किं नामाख्यातम्। किं लिङ्गम्। किं वचनम्। का विभक्तिः। कः प्रत्ययः इति[6] मध्ये विवेचितमस्ति। प्रसङ्गतः विशेषरूपेण विवेचनक्रमे सुप्प्रत्ययाः एव विवेचनक्रमे प्रसिद्धास्सन्ति। तदर्थं प्रसिद्धं प्रकरणं कारकप्रकरणम्। तस्य अपरं नाम विभक्त्यर्थप्रकरणमपि। तत्र सर्वासां विभक्तीनां त्रिधा प्रतिपादनं प्राप्यते यथा-

**१. कारकविभक्तिः**

**२. उपपदविभक्तिः**

**३. साधारणविभक्तिः**

**प्रथमाकारके यथा**

राम: गच्छति। कारकविभक्तिः, विषवृक्षोपि इति उपपदविभक्ति, उच्चैः नीच्चैः इति साधारणविभक्तिः।

**द्वितीयाकारके यथा-**

ग्रामं गच्छति। उभयतः ग्रामम्, मासं गुडधानाः।

**तृतीयाकारके-** रामेण रावणः हतः। पुत्रेण सह पिता। कर्णेन वधिरः।

**चतुर्थीकारके-** दरिद्राय धनं ददाति। ब्राह्मणाय हितम्। मुक्तये हरिं भजति।

---

१. ऋग्वेद: १०.८९.१०

२. ऋग्वेद:१.७.१

३. (ऋग्वेद: ७.१८.१५

४. ऋ. ८.९८.१

५. ऋ. ६.६९.६

६. गोपथब्राह्मणस्य प्रथमे प्रपाठके (१.२४)

**पञ्चमीकारके-** वृक्षात् पतति। कृष्णादन्यः। जाड्यात् बद्धः।
**षष्ठविभक्तौ-** कृष्णस्य कृतिः। वृक्षस्य उपरि। नृणां ब्राह्मणः श्रेष्ठः।
**सप्तमीकारके-** तिलेषु तैलम्। हरि पूजने कुशलः। केशेषु चरमीं हन्ति।

यदि एषा व्यवस्था न स्यात् किं तर्हि समेपि शब्दाः पृथक्भूताः न स्युः यतो हि सर्वेषां शब्दानां स्वरूपं स्वतः एव भिन्नं, जातिश्च भिन्ना अर्थश्च भिन्नः तर्हि अस्याः विभक्तेः किं प्रयोजनं यथा रामशब्दः, श्यामशब्दः कृष्णशब्दः तत्र तु पार्थक्यं स्वयमेव। यतो हि जातिगुणक्रियासंज्ञासु विशिष्टासु तज्जात्याद्यनुगतीकृतव्यक्तिषु शक्तिग्रहो वाच्यो भवति। तर्हि इयं विभक्तिव्यवस्था किमर्था इति प्रश्ने यदि इयं विभक्तिव्यवस्था न स्यात् तदा एकस्यैव शब्दस्य नाना भेदानामुत्पत्तिर्न स्यात्। यथा एकस्यैव रामशब्दस्य रामः रामौ रामाः इति नानारूपेण प्रयोगावसरो न स्यात्। परन्तु यदि विभक्तिसंज्ञा भवति तदा एव तदनुरूपा एकवचनद्विवचनबहुवचनसंज्ञाः इतोपि प्रथमाद्वितीयातृतीयाचतुर्थी-पञ्चमीषष्ठीसप्तमीसंज्ञाः अपि भवन्ति तदा एव ताः ताः प्रक्रियाः सम्यग्रूपेण प्रचलन्ति।
सारांशः- संस्कृतव्याकरणे विभक्तेः मूलतः द्वौ भेदौ प्रसिद्धौ। प्रथमा सुप्, यस्याः विधानं द्रव्यवाचिभ्यः नामभ्यो भवति। यस्या सप्तभेदाः प्रसिद्धाः। द्वितीयो भेदः तिङ्विभक्तिरिति। तस्याः विधानं क्रियावाचकधातुभ्यो भवति। पुनस्ताः आत्मनेपदी परस्मैपदी भेदात् द्विधा विभक्ताः भवन्ति। अस्य वाक्यपदीयकार उपग्रहनिरूपणमिति नाम दत्तवान्। क्रियायाः पुरुषवचनार्थप्रकटनकारणाद् अस्याः नवधा विभाजनं भवति। वस्तुतः तिङ्विभक्तयः सुप्वत् स्वतन्त्रभूताः न सन्ति तास्तुऽआदेशभूताः परन्तु प्रकरणपरम्परायां प्रत्ययवत् प्रसिद्धास्सन्ति। एतदपेक्षया तद्धितप्रत्ययानामपि प्राग्दिशीयप्रकरणे तसिलादीनामष्टादशानामपि विभक्तिसंज्ञा भवति। महर्षिपाणिनिना यच्च तद्धितप्रकरणे सूत्रं प्रोक्तं "प्राग्दिशो विभक्तिः" तस्य तु आर्थिकदृष्ट्या प्रयोगन्यूनविशिष्टं परन्तु भौतिकदृष्ट्या च प्रयोगभूयस्त्वं प्रतिभाति। विभक्तिसंज्ञानिमित्तं यच्च रूपीयकार्यध्वनिपरिवर्तनं प्रतिपादितमस्ति। अवधेयमिदं यत् एतेषां विधानेऽपि विभक्तिसंज्ञा तन्निमित्तककार्य-सम्पादनेपि पदत्वनिष्पादकत्वं न सम्भवति। पदसंज्ञा तु सुप्तिङ्निमित्तमात्रमेव। प्राग्दिशीया विभक्तिसंज्ञाशास्त्रमात्रप्रक्रिया निर्वाहिका। सुप्तिङनिमित्ता तु शास्त्रीयलौकिकोभय सा-धिका भवति। सुब्निमित्तकं कार्यं तु कारकप्रकरणे प्रथमा आरभ्य सप्तमी पर्यन्तं प्रसिद्धम्। तत्र नाना रूपमधिकृत्य कार्याणि साधितानि सन्ति। अर्थनिर्धारणञ्च कृतमस्ति। क्रियाऽपि द्विविधा सत्वभूता असत्वभूता च। तस्याः कृते एव सिद्धा साध्या इति प्रसिद्धिः। तत्र असत्वभूताभ्यः तिङ्प्रत्ययानां विधानं प्राप्यते। तदर्थं त्रिधाधातुरूपाणि प्राप्यन्ते यथा सूत्रपठिताः धातवः, गणपठिताः धातवः, सनादिप्रत्ययविशिष्टाः धातवः। इमे प्रत्ययाः लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् भेदविशिष्टेभ्यः कर्तरि कर्मणि भावे च विहिताः भवन्ति। तत्र इतोऽपि वाच्यभेदव्यवस्था, कालभेदव्यवस्था,

शाब्दबोधवैचित्र्यं लेखनकलावैशिष्ट्यञ्च नाना शास्त्रेषु विवेचितास्सन्ति। यथाक्रममवधेयम्। इतोऽपि विभक्त्यन्तप्रत्ययाः अपि सन्ति ते च तद्धिता एव। यथा उदर ठक् औदरिकः। समय ठक् सामयिकः। लवठञ् लावणिकः। अन्येषु व्याकरणेषु एताषां विभक्तीनां स्वरूपवैचित्र्यं दृग्गोचरी भवति।

**ग्रन्थसूची-**

१. वैयाकरणसिद्धान्तकौमुदी चत्वारो भागाः, गिरिधरशर्मा मोतीलालबनारसीदासः, वाराणसी २०१०
२. संस्कृत के प्रत्ययों का भाषाशास्त्रीय पर्यालोचन प्रो. आजादमिश्रः, मधुकरप्रकाशन, लखनऊ १९८९
३. वाक्यपदीयम् ब्रह्मकाण्डम्, शुक्लसूर्यनारायणः, चौखम्भासंस्कृतसंस्थानम् वाराणसी २०१६
४. पाणिनि अष्टाध्यायी सत्यनारायणखण्डूडी चौखम्भा कृष्णदास अकादमी २००८
५. परमलघुमञ्जूषा जयशङ्करलालत्रिपाठी चौखम्भा कृष्णदास अकादमी २०११
६. महाभाष्यम् श्रीगुरुप्रसादशास्त्री प्रतिभाप्रकाशनम्, नवदेहली १९९९
७. वैयाकरणसिद्धान्तपरमलघुमञ्जूषा, माधवशास्त्रीभण्डारी, राष्ट्रियसंस्कृतसंस्थानम् नवदेहली २०१२
८. काशिका जयशङ्करलालत्रिपाठी ताराबुक एजेन्सी वाराणसी २०१२
९. लघुशब्देन्दुशेखरः गुरुप्रसादशास्त्री, वाणविलासप्रकाशनम्, वाराणसी १९९१
१०. खण्डनखण्डखाद्यम् श्रीहर्षः चौखम्भा संस्कृत भण्डार, वाराणसी २०११
११. लघुशब्देन्दुशेखरः अजन्तो भागः प्रो. वैद्यनाथझाः राष्ट्रियसंस्कृतसाहित्यकेन्द्रम् जयपुरम् २०१९
१२. संस्कृतशास्त्रो का इतिहास आचार्यबलदेवोपाध्यायः, चौखम्भासंस्कृतसंस्थानम्, वाराणसी २००६
१३. निरुक्तम् दैवतकाण्डम् आचार्यभगीरथशास्त्री, मेहरचन्दलछमनदास पब्लीकेशन नई दिल्ली२०१२
१४. वैयाकरणसिद्धान्तकौमुदी (लक्ष्मीटीका) मोतीलालबनारसीदासप्रकाशनम् , वाराणसी १९६६
१५. समाससमीक्षणम् डॉ.सुधाकरमिश्रः बनारसमर्कण्टाइलकम्पनी, कोलकाता २०११

*****

 ISSN 2278-0416

# जैनदर्शने सम्यग्दर्शनविवेचनम्

*प्रो. कुलदीपकुमारः

**सद्दृष्टिज्ञानवृत्तानि, धर्मं धर्मेश्वरा विदुः।**
**यदीयप्रत्यनीकानि, भवन्ति भवपद्धतिः॥**

भारतीय दर्शनस्य इतिहासे जैनदर्शनस्य महत्त्वपूर्णस्थानं विलसति। अस्य दर्शनस्य प्राचीनानि अनेकानि अभिधानानि विलसन्ति। यथा- अर्हत्दर्शनं, श्रमणदर्शनं, निर्ग्रन्थदर्शनं, जिनदर्शनं, वीतरागदर्शनं, स्याद्वाददर्शनम्, अहिंसादर्शनम् अनेकान्तदर्शनं इत्यादीनि। संसारस्य सर्वाणि दर्शनानि मुक्त्यर्थम् अनेकविधान् उपायान् प्रवदन्ति। कश्चित् भक्तिपूर्वकम्, कश्चित् ज्ञानेन उत वा कठोरतपाचरणेन मोक्षस्य मार्गं वदति। किन्तु जैनदर्शने आचार्येण उमास्वामिना तत्त्वार्थसूत्रग्रन्थे प्रथमसूत्रे प्रतिपादितं यत्-

**''सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः।[1]''**

सम्यग्दर्शनस्य सम्यग्ज्ञानस्य सम्यक्चारित्रस्य च एकरूपता एव मोक्षमार्गः अस्ति। अर्थात् एतेषां त्रयाणां योगेनैव मोक्षमार्गः भवति। यदि एकमपि नास्ति तर्हि मोक्षपदं प्राप्तुं न शक्यते। यथा- दीपकः वर्तिका तैलम् एतेषां त्रयाणां संयोगात् एव अन्धकारस्य विनाशः भवितुमर्हति- एतेषां भिन्नत्वेन न। सम्यग्दर्शन-ज्ञान-चारित्राणि एव **'रत्नत्रयम्'** इत्युच्यते।

सम्यग्दर्शनं जैनदर्शनस्य मूलाधारो वर्तते। मूलम् अर्थात् **'जड़'** इति आधारो वा।

**'दंसण मूलो धम्मो।'**

इदं धर्मवृक्षस्य मूलमस्ति। मूलं विना वृक्षस्य कल्पना अपि न कर्तुं शक्यते। सम्यग्दर्शनं **'छहढाला'** पुस्तके 'मोक्षमहल की प्रथम सीढ़ी' इत्युक्तम्।

---

* आचार्यः जैनदर्शनविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली-१६ मो.- ९५६०२५०११७, ई. मेल- kuldeepkumar30@gmail.com

१. आचार्य उमास्वामी, तत्त्वार्थसूत्रम्, १/१

**व्युत्पत्तिः-**

**'समञ्चति इति सम्यक्।'** सम्यग्दर्शनं शब्दद्वयं मिलित्वा निर्मितम्। सम्यक्+दर्शनम्, सम्+अञ्च+क्विप् प्रत्ययः। 'सम्यक्' शब्दः अव्ययः वर्तते, अस्यार्थः समीचीनं सत्यं वा वर्तते। 'दर्शनम्' शब्दः दृश् धातुतः निर्मितः वर्तते, यस्य सामान्यार्थः 'दर्शनं' भवति किन्त्वत्र मोक्षमार्गप्रकरणं वर्तते तथा च 'सम्यग्दर्शनम्' जैनदर्शनस्य एकः विशेषः पारिभाषिकशब्दोऽस्ति; अतः अत्र दर्शनस्य अर्थः सामान्यं दर्शनं न स्वीकर्तव्यः अपि तु 'श्रद्धानं' करणीयम्।

**लक्षणानि-**

1. सद्देवस्य सद्शास्त्रस्य सद्गुरोश्च श्रद्धानं सम्यग्दर्शनमुच्यते।
2. सप्ततत्त्वानां यथार्थश्रद्धानं सम्यग्दर्शनमुच्यते।
3. स्वपरयोः श्रद्धानं सम्यग्दर्शनमुच्यते।

आत्मनः श्रद्धानं सम्यग्दर्शनमुच्यते। अर्थात् सद्देवशास्त्रगुरुषु श्रद्धानं सम्यग्दर्शनमुच्यते। यथा-

**श्रद्धानं परमार्थानामाप्तागमतपोभृताम्।**
**त्रिमूढापोढमष्टाङ्गं सम्यग्दर्शनमस्मयम्॥**[१]

सद्देवे सच्छास्त्रे सद्गुरौ च त्रिमूढतारहितम्, सम्यक्त्वस्य अष्टाङ्गसहितम् तथा च अष्टमदरहितम् अविचलश्रद्धानं सम्यग्दर्शनं वर्तते।

<u>सद्देवाः</u>- वीतरागिणः सर्वज्ञाः हितोपदेशिनः चैव सद्देवाः सन्ति। यथा-

**आप्तेनोत्सन्नदोषेण सर्वज्ञेनागमेशिना।**
**भवितव्यं नियोगेन नान्यथा ह्याप्तता भवेत्॥**[२]

<u>सद्शास्त्राणि</u>- सद्देवैः प्रोक्ता वाणी एव सद्शास्त्राणि सन्ति। यथा-

**आप्तोपज्ञमनुल्लंघ्यमदृष्टेष्टविरोधाकम्।**
**तत्त्वोपदेषकृत्सार्वं शास्त्रं कापथघट्टनम्॥**[३]

<u>सद्गुरवः</u>- निर्ग्रन्थाः एव सद्गुरवः विलसन्ति। येषां पञ्चेन्द्रियेषु आसक्तिः नास्ति, हिंसा न कुर्वन्ति, आरम्भपरिग्रहेभ्यः रहिताः सन्ति, ते निर्ग्रन्थगुरवः एव सद्गुरवः सन्ति। यथा-

---

१. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- ४
२. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- ५
३. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- ९

**विषयाशावशातीतो निरारम्भोऽपरिग्रहः।**
**ज्ञानध्यानतपोरत्नस्तपस्वी स प्रशस्यते॥**[1]
**तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्।**[2]

सप्ततत्त्वानि- जीवः, अजीवः, आस्रवः, बन्धः, संवरः, निर्जरा मोक्षश्चेति। एतेषां यथार्थश्रद्धानं सम्यग्दर्शनमुच्यते।

- **जीवः- चेतनालक्षणो जीवः।** यस्मिन् चेतना प्राप्यते, सः जीवः उच्यते।
- **अजीवः-** यस्मिन् चेतना नास्ति, तत् अजीवतत्त्वम् उच्यते। **जीवात् विपरीतः अजीवः।**
- **आस्रवः-** आत्मनि कर्मणाम् आगमनम् आस्रव अस्ति। **शुभाशुभकर्मागमद्वाररूपमास्रवः।**
- **बन्धः-** आत्मनि कर्मणां स्थिरीभवनं बन्धतत्त्वं भवति। **'आत्मकर्मणोरन्योऽन्यप्रदेशानुप्रवेशात्मको बन्धः।'**
- **संवरः-** आत्मनि कर्मणाम् आगमनस्य अवरोधः एव संवरतत्त्वं वर्तते। **आस्रवनिरोधलक्षणः संवरः।**
- **निर्जरा-** आगतानां कर्मणां शनैः शनैः गमनं मोक्षतत्त्वमस्ति। **एकदेशकर्मसंक्षयलक्षणा निर्जरा।**
- **मोक्षः-** सर्वकर्मणाम् आत्मनः गमनं मोक्षतत्त्वमस्ति। **कृत्स्नकर्मवियोगलक्षणो मोक्षः।**

<u>**दृष्टान्तः**</u>- सप्ततत्त्वानि बोधयन् एकः सुन्दरः दृष्टान्तः शास्त्रेषु प्राप्यते-

एकस्मिन् ग्रामे एकः जनः निवसति स्म। तेन निजग्रामस्य प्रतिदिनं प्रातः काले नदीपारे अतीवसुन्दरं दृश्यं दृश्यते। तस्य विचारः आसीत् यत् एकस्मिन् दिने सः तत्र नदीपारम् अवश्यं गमिष्यति। एकदा सः सङ्कल्पं करोति तथा च स्वगृहमित्यादीनां विक्रयणं कृत्वा नदीपारं गन्तुं सिद्धतां करोति। एतदर्थं सः एकां नौकां निर्माति। स्वस्य सर्वाणि रूप्यकाणि वस्तु इत्यादीनि स्वीकृत्य सः नौकायाम् उपविष्टवान्। सः जनः जीवतत्त्वमस्ति। तं जनमतिरिच्य नौका वस्तूनि सर्वम् अजीवतत्त्वमस्ति।

सः नौकायां प्रस्थानम् अकरोत्। मार्गे पश्यति यत् नौकायाम् एकं छिद्रमस्ति। तस्मात् छिद्रात् जलं नौकायाम् आगच्छति। यदिदं जलागमनस्य द्वारमस्ति एतदेव

---

१. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- १०
२. आचार्य उमास्वामी, तत्त्वार्थसूत्रम्, १/२

आस्रवतत्त्वं वर्तते। जलं नौकायाम् आगत्य एकस्मिन् भागे सञ्चितं भवति, इदमेव बन्धतत्त्वमस्ति।

इदानीं सः चिन्तयति यत् छिद्रं विशालमस्ति, एतावता जलागमनात् अहं मार्गे एव जले निमज्जितो भविष्यामि मरिष्यामि च। नदीपारगमनस्य मम स्वप्नः नष्टः भविष्यति। अतः तेन संकल्पः कृतः यत् अस्य छिद्रस्य अवरोधः करणीयः। तेन स्ववस्त्रैः तत् छिद्रं अपिहितं छिद्रापिधानमेव संवरतत्त्वमस्ति।
अधुना ततो अधिकजलागमनम् अवरुद्धम्, परन्तु यज्जलमागतं तदपि अल्पं नासीत्, बहु-अधिकमासीत् तस्मात् कारणात् नौका अस्थिरा आसीत्। अपायोऽधिकः आसीत्। कस्मिन्नपि क्षणे नौकायाम् आगतजलकारणात् नौका जले परिवर्तिता भवितुं शक्यते। नदीमध्ये च निमज्जिता भवितुमर्हति। तेन सङ्कल्पः कृतः यत् सः नौकायाः सर्वं जलं नौकायाः बहिः करिष्यति।

तेन अत्यधिकश्रमपूर्वकं स्वहस्ताभ्यां जलं बहिः निष्कासितम्। यदा सर्वं जलं बहिः निर्गतं तदा नौका अल्पभारयुता जाता नदीपारं च गता प्राप्ता वा। इदमेव मोक्षतत्त्वं विद्यते।

सारांशोऽयं वर्तते यत् परपदार्थाः अर्थात् अन्यपदार्थाः निजात्मनः भिन्नाः इत्यगत्य निजात्मनि प्रीतिः श्रद्धानं वा निश्चयसम्यग्दर्शनं वर्तते। "**स्वपरयोर्विभागदर्शनेन दर्शको भवति।**[१]"

एवं प्रकारेण वयं पश्यामः यत् यदा सद्देवशास्त्रगुरून् प्रति यथार्थश्रद्धानं भवति तदा तैः उपदिष्टेषु बोधितेषु वा सप्ततत्त्वेषु श्रद्धानं भवति। फलस्वरूपं स्वपरयोरपि श्रद्धानं श्रद्धा वा भविष्यति। अस्माच्च आत्मज्ञानं भविष्यति वीतरागता च प्राप्ता भविष्यति। यदा वीतरागता प्राप्ता भविष्यति तदा वास्तविकसुखस्य (मोक्षस्य) अपि प्राप्तिः सुनिश्चिता भविष्यति।

**सम्यग्दर्शनस्य भेदप्रभेदाः**- सम्यग्दर्शनस्य भेदप्रभेदयोः उल्लेखनं विभिन्नापेक्षाभिः क्रियते। सम्यग्दर्शनस्य भेदप्रभेदान् वयं अधोलिखितं रेखचित्रमाध्यमेन ज्ञातुं शक्नुमः। यथा-

---

१. अमृतचन्द्राचार्यः, समयसारः आत्मख्याति, गाथा- ३१४




**प्रथम-अपेक्षा**

सामान्यतया सम्यग्दर्शनम् एकविधम् एकं वा अस्ति

**द्वितीय-अपेक्षा**

उत्पत्ति-अपेक्षया द्विविधमस्ति- (1) निसर्गजम् (2) अधिगमजम्

अथवा

(1) निश्चयः (2) व्यवहारः

अथवा

(1) सरागः (2) वीतरागः

**तृतीय-अपेक्षा**

कर्मोदयस्य उपशमस्य च अपेक्षया त्रिविधमस्ति-

(1) औपशमिकः (2) क्षायिकः (3) क्षायोपशमिकः

**चतुर्थ-अपेक्षा**

निक्षेपस्य अपेक्षया

चतुर्विधमस्ति- (१) नाम (2) स्थापना (3) द्रव्यम् (4) भावः

**दशम-अपेक्षा**

रुचे अपेक्षया

दशविधमस्ति- (1) आज्ञा (2) मार्गः (3) उपदेशः (4) सूत्रम् (5) बीजम् (6) संक्षेपः (7) विस्तारः (8) अर्थः (9) अवगाढः (10) परमावगाढः

**धवला-अपेक्षा**

धवलायाः अपेक्षया शब्दस्य अपेक्षया च संख्यातम्, अर्थस्य अपेक्षया असंख्यातम् भावानाम् अपेक्षया अनन्तविधं सम्यग्दर्शनं भवति।

१. **प्रथमा अपेक्षा**- सामान्यतया सम्यग्दर्शनम् एकविधमस्ति।

२. **द्वितीया अपेक्षा**- उत्पत्तेः अपेक्षया सम्यग्दर्शनं द्विविधमस्ति-निसर्गजसम्यग्दर्शनम् अधिगमजसम्यग्दर्शनम्।

- **निसर्गजसम्यग्दर्शनम्**- इदं कस्यचित् उपदेशं विना अर्थात् स्वतः (जातिस्मरणम्, वेदना, जिनबिम्बदर्शनादि) उत्पन्नं भवति।
- **अधिगमजसम्यग्दर्शनम्**- इदं परोपदेशेन (आचार्यादीनाम् उपदेशेन) उत्पन्नं भवति।

३. **तृतीया अपेक्षा**- कर्मणाम् उपशम-क्षय-क्षयोपशमानाम् अपेक्षया सम्यग्दर्शनस्य त्रयः भेदाः भवन्ति। दर्शनमोहनीयकर्मणः तिस्रः प्रकृत्यः (मिथ्यात्वम्, सम्यक्मिथ्यात्वम्, सम्यक्त्वम्) तथा च चारित्रमोहनीयकर्मणः चतस्रः प्रकृतयः (अनन्तानुबन्धी-क्रोधः, अनन्तानुबन्धीमानः, अनन्तानुबन्धी-माया, अनन्तानुबन्धी लोभः), आहृत्य सप्तप्रकृतयः सम्यक्त्वस्य घातं कुर्वन्ति। आसां सप्तप्रकृतीनाम् उपरमात् क्षयात् क्षयोपशमात् च सम्यक्त्वस्य उत्पत्तिर्भवति। एवं सम्यक्त्वस्य त्रयः भेदाः भवन्ति- औपशमिकसम्यग्दर्शनम्, क्षायिकसम्यग्दर्शनम्, क्षायोपशमिकसम्यग्दर्शनञ्चेति।

- **औपशमिकसम्यग्दर्शनम्**- आसां सप्तप्रकृतीनाम् उपशमात् तत्त्वेषु यत् श्रद्धानं भवति तत् औपशमिकसम्यग्दर्शनं भवति। उपशमस्य अर्थोऽस्ति आंशिकशमनं यथा स्वच्छजले स्फटिकपातनेन मलः अधः आगच्छति तिष्ठति वा (एवं प्रकारेण एव कर्मणः) उपशमात् अन्तर्मुहूर्तं यावत् जीवस्य परिणामाः अत्यन्तनिर्मिलाः भवन्ति। भेदः केवलम् एतदेव वर्तते यत् अस्यावधिः अतीवन्यूना भवति। अस्य कालः अन्तमुर्हूतं भवति अर्थात् अन्तमुर्हूर्तात् परम् अवश्यमेव गच्छति नष्यति वा।
- **क्षायिकसम्यग्दर्शनम्**- क्षयस्य अर्थोऽस्ति नाशः। कर्मणाम् आत्मनः सर्वथा दूरी भवनं 'क्षयः' इत्युच्यते। यथा- स्फटिकमाध्यमेन स्वच्छीकृतं जलम् अन्यपात्रे परिवर्तनेन तस्मिन् जले मलस्य सर्वथा अभावो भवति। अनेन प्रकारेण एव उपर्युक्तसप्त-प्रकृतीनां क्षयत्वात् तत्त्वानि प्रति यत् सुदृढश्रद्धानं भवति, तत् क्षायिकसम्यग्दर्शनमस्ति। इदं निर्मलम् अक्षयं मरुसमानम् अकम्पनीयं भवति, तथा च एकवारं प्राप्ते सति कस्यामपि परिस्थितौ नष्टं न भवति।
- **औपशमिकसम्यग्दर्शनम्**-चतुर्णाम् अनन्तानुबन्धिकषायाणाम् मिथ्यात्वस्य सम्यग्मिथ्यात्वस्य च आसां षट्प्रकृतीनाम् अनुदयात् तथा च सम्यक्त्वप्रकृतेः उदयात् यत् सदोषं तत्त्वार्थश्रद्धानम् उत्पद्यते तत् क्षायोपशिकसम्यग्दर्शनमस्ति। केचन शङ्कादिदोषाः

सम्यक्त्वं मलिनं कुर्वन्ति। अस्य उदयात् दोषसहितं सम्यग्दर्शनं भवति।
धवलायाः अपेक्षया शब्दस्य अपेक्षया च सम्यग्दर्शनं संख्यातविधमस्ति, अर्थस्य अपेक्षया असंख्यातविधमस्ति, भावानाम् अपेक्षया अनन्तविधमस्ति।

**सम्यग्दर्शनस्य अष्टाङ्गानि गुणाः वा-**

सम्यग्दर्शनस्य एतानि अष्टाङ्गानि निम्नानुसारं सन्ति-

१ ) **निःशङ्किताङ्गम्-**

**इदमेवेदृशमेव तत्त्वं नान्यत् चान्यथा।**
**इत्यकम्पायसाम्भोवत्सन्मार्गेऽसंशया रुचिः॥**[1]

वस्तुस्वरूपम् इदमेव अन्यत् नास्ति, एवमेव वर्तते नान्यत्।

२ ) **निःकांक्षिताङ्गम्- कर्मणां फलानि प्रति आकांक्षा अकरणम्। यथा-**

**कर्मपरवशे सान्ते दुःखैरन्तरितोदये।**
**पापबीजे सुखेऽनास्था श्रद्धानाकाङ्क्षणा स्मृता॥**[2]

३ ) **निर्विचिकित्सा-** ये रत्नत्रयेण पवित्राः सन्ति एतादृशानां मुनिजनानां मलिनं शरीरं दृष्ट्वा घृणा न करणम्, तेषां गुणान् प्रति च प्रीतिकरणं निर्विचिकित्सायाः अङ्गं वर्तते। यथा-

**''स्वभावतोऽशुचौ काये रत्नत्रयपवित्रिते।**
**निर्जुगुप्सा गुणप्रीतिर्मता निर्विचिकित्सता॥**[3]**''**

४ ) **अमूढदृष्टि-अङ्गम्-** तत्त्वे सिद्धान्ते च अज्ञानता मूर्खता वा न करणम्। यथा-

**कापथे पथि दुःखानां कापथस्थेऽप्यसम्मतिः।**
**असंपृक्तिरनुत्कीर्तिरमूढा दृष्टिरुच्यते॥**[4]

५ ) **उपगूहनाङ्गम्-** परदोषाणाम् आवरणीकरणम् उपगूहनाङ्गम् अस्ति। यथा-

**स्वयं शुद्धस्य मार्गस्य बालाशक्तजनाश्रयाम्।**
**वाच्यतां यत्प्रमार्जन्ति तद्वदन्त्युपगूहनम्॥**[5]

६ ) **स्थितिकरणम्-** कर्मोदयात् धर्मात् विचलितस्य रक्षाकरणम्, तस्य तस्मिन् धर्मे पुनः स्थिरीकरणम्, स्थितिकरणं वर्तते। यथा-

१. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- ११
२. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- १२
३. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- १३
४. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- १४
५. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- १५

**दर्शनाच्चरणाद्वापि चलतां धर्मवत्सलैः।**
**प्रत्यवस्थापनं प्राज्ञैः स्थितीकरणमुच्यते॥**[1]

**७. वात्सल्याङ्गम्-** धर्मात्माभिः सह गोवत्स इव स्नेहकरणं वात्सल्याङ्गं वर्तते। यथा-

**स्वयूथ्यान्प्रति सद्भावसनाथापेतकैतवा।**
**प्रतिपत्तिर्यथायोग्यं वात्सल्यमभिलप्यते॥**[2]

**८. प्रभावना-** जिनधर्मस्य प्रभावना पूजा प्रतिष्ठा रथयात्रा विद्यादानादीनि दत्त्वा करणीया। यथा-

**अज्ञानतिमिरव्याप्तिमपाकृत्य यथायथम्।**
**जिनशासनमाहात्म्यप्रकाशः स्यात्प्रभावना॥**[3]

**सम्यग्दर्शनस्य पञ्चविंशतिदोषाः-**

सम्यग्दर्शनस्य पञ्चविंशतिदोशरहितं भवति- अष्टशङ्कादिदोषाः अष्टमदाः षडानायतनानि त्रिमूढताः च एते दोषाः सम्यग्दृष्टिषु न भवन्ति।

**क) अष्टशङ्कादिदोषाः-** सम्यग्दर्शनस्य अष्टाङ्गानां विपरीताः भवन्ति अष्टदोषाः।

- **शङ्का-** जिनेन्द्रदेवानां वचनेषु अप्रयोजनभूतविषयेषु च शङ्काकरणम्।
- **काङ्क्षा–** फलेच्छाकरणम्।
- **विचिकित्सा–** मुनीनां मलिनं शरीरं दृष्ट्वा ग्लानिकरणम्।
- **मूढदृष्टिः–** यथार्थज्ञानाभावः।
- **अनुपगूहनम्–** परदोषाणां प्रकटीकरणम्।
- **अस्थितीकरणम्–** धर्मात् विचलितानां स्थिरीकरणं न करणम्।
- **अवात्सल्यम्–** साधर्मिजनेषु स्नेहभावस्य अभावः।
- **अप्रभावना–** जिनधर्मस्य प्रभावना न करणम् अथवा जिनधर्मविरुद्धकार्यकरणम्।

**ख) अष्टमदाः-**

**ज्ञानं पूजां कुलं जातिं बलमृद्धिं तपो वपुः।**
**अष्टावाश्रित्य मानित्वं स्मयमाहुर्गतस्मयाः॥**[4]

---

१. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- १६
२. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- १७
३. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- १८
४. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- २५

**ग) षडानायतनानि-** सम्यग्दर्शनादिगुणानाम् आधारम् आश्रमं वा आयतनमुच्यते। सद्देव-शास्त्र-गुरवः तथा च एतेषां त्रयाणाम् उपासकाः षडानायनानि भवन्ति।
१. कुदेवः २. कुशास्त्रम् ३. कुगुरुः ४.कुदेवस्य उपासकः ५. कुशास्त्रस्य उपासकः ५. कुगुरोः उपासकः।

**(घ) त्रिमूढता-** मूढतायाः अर्थोऽस्ति अविवेकत्वम्। इयं त्रिविधा वर्तते-

**१. लोकमूढता-** अन्धविश्वासात् प्रेरितो सन् कार्यकरणे, गिरितः पतित्वा अग्नौ ज्वलित्वा वा मरणे, नद्यां स्नानकरणे, वृक्षपूजने, श्राद्धकरणे मृत्युभोजकरणे च, धर्म-मननं लोकमूढता वर्तते। यथा-

**आपगासागरस्नानमुच्चयः सिकताश्मनाम्।**
**गिरिपातोऽग्निपातश्च लोकमूढं निगद्यते॥**[१]

**२. देवमूढता-** ऐहिकफलेच्छया रागद्वेषयुक्तकुदेवानां पूजनम् उपासनाकरणं वा देवमूढता अस्ति। यथा-

**वरोपलिप्सयाशावान् रागद्वेषमलीमसाः।**
**देवता यदुपासीत देवतामूढमुच्यते॥**[२]

**३. गुरुमूढता-** परिग्रहः आरम्भः हिंसासहितपाखण्डीनां साधूनाम् आदरः सम्माननं भक्तिपूजा इत्यादिकरणं गुरुमूढता वर्तते। यथा-

**सग्रन्थारम्भहिंसानां संसारावर्त्तवर्त्तिनाम्।**
**पाषण्डिनां पुरस्कारो ज्ञेयं पाषण्डिमोहनम्॥**[३]

<u>**सम्यग्दर्शनस्य पञ्चातिचाराः-**</u>

**शङ्काकांक्षाविचिकित्साऽन्यदृष्टिप्रशंसासंस्तवाः सम्यग्दृष्टेरतिचाराः।**[४]

शङ्का, कांक्षा, विचिकित्सा, अन्यदृष्टिप्रशंसा, अन्यदृष्टिसंस्तवनम्, सम्यग्दर्शनस्य एते पञ्चातिचाराः सन्ति।

<u>**सम्यग्दर्शनस्य उत्पत्तेः कारणानि**</u>**-** कारणं तदुच्यते यत् कार्यम् अवश्यमेव कुर्यात्। जैनदर्शने प्रत्येकस्य कार्यस्य कारणद्वयं मन्यते।

- **उपादानकारणम्-** यत् स्वयं कार्यरूपं परिणमितं भवति, तदुपादानकरणम्

---

१. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- २२
२. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- २३
३. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- २४
४. आचार्य उमास्वामी, तत्त्वार्थसूत्रम् ७/१३

अस्ति। यथा घटोत्पत्तौ मृत्तिका उपादानकारणं वर्तते।

- **निमित्तकारणम्**- यत् कार्यस्य भवने करणे वा सहयोगी अस्ति तत् निमित्तकरणमस्ति। यथा घटोत्पत्तौ कुम्भकारः, कुलालचक्रं जलम् इत्यादिनि।




<u>सम्यग्दर्शनस्य महिमा (महत्त्वम्)</u>-

**(१) मोक्षमहल की परथम सीढ़ी, या बिन ज्ञान चारित्रा।**
**सम्यक्ता न लहै, सो दर्शन धारो भव्य पवित्रा।।**[१]

छहढालाकारेण पं. दौलतरामवर्येण कथितं यत् सम्यग्दर्शनं विना ज्ञानं चारित्रञ्चापि सम्यक्त्वं न प्राप्नुतः। अतः हे भव्यजीवाः! एतादृशं पवित्रं सम्यग्दर्शनं धारयन्तु।

**(२) 'दंसण मूलो धम्मो।'**[२]

इदं धर्मवृक्षस्य मूलमस्ति। वृक्षे यत् स्थानं मूलस्य भवति, मोक्षमार्गे तद् स्थानं सम्यग्दर्शनस्य भवति। मूलं विना वृक्षस्य कल्पना अपि न शक्या।

**(३) दंसणभट्ठ भट्ठ।**[३]

दर्शनभ्रष्टः एव सत्यार्थे भ्रष्टोऽस्ति। दर्शनभ्रष्टः निर्वाणं न प्राप्नोति।

**(४) दंसण सुद्धो सुद्धो।**[४]

दर्शनशुद्धः सत्यार्थे शुद्धोऽस्ति। दर्शनशुद्धः एव निर्वाणं प्राप्नोति।

**(५) दर्शनं कर्णधारं तन्मोक्षमार्गे प्रचक्षते।**[५]

---

१. पं.दौलतराम, छहढाला, ३/१७
२. कुन्दकुन्दाचार्यः, दर्शनपाहुडम्, गाथा- २।
३. कुन्दकुन्दाचार्यः, दर्शनपाहुडम्, गाथा- ३।
४. कुन्दकुन्दाचार्यः, दर्शनपाहुडम्।
५. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- ३१

(६) **विद्यावृत्तस्य संभूति-स्थितिवृद्धिफलोदयाः।**
**न सन्त्यसतिसम्यक्त्वे बीजाभावे तरोरिव॥**[1]

सम्यग्दर्शनं रत्नत्रयवृक्षस्य बीजमस्ति। येन प्रकारेण बीजाभावे वृक्षस्य उत्पत्तिः-स्थितिः-वृद्धिः फलप्राप्तिश्च न शक्यते तेन प्रकारेण एव सम्यग्दर्शनस्य अभावे ज्ञानचारित्रयोः उत्पत्तिः, स्थितिः, वृद्धिः फलप्राप्तिश्च न भवति।

(७) **न सम्यक्त्वसमं किञ्चित्, त्रैकाल्ये त्रिजगत्यपि।**
**श्रेयोऽश्रेयश्च मिथ्यात्वसमं नान्यत्तनूभृताम्॥**[2]

सम्यम्त्वसमं त्रिकालेषु त्रिलोकेषु च अन्यत् किमपि सुखकारकं नास्ति।

(८) **गृहस्थो मोक्षमार्गस्थो, निर्मोहो नैव मोहवान्।**
**अनगारो गृही श्रेयान्, निर्मोहो मोहिनो मुनेः॥**[3]

मोक्षमार्गस्थितः निर्मोही निरासक्तः वा गृहस्थः मोही-आसक्त-साधुतः श्रेष्ठः विद्यते।

(९) **ओजस्तेजोविद्यावीर्ययशोवृद्धिविजयविभवसनाथाः।**
**महाकुला महार्था मानवतिलका भवन्ति दर्शनपूताः॥**[4]

सम्यग्दर्शनेन पवित्राः जीवाः कान्ति-प्रताप-विद्या-पराक्रम-कीर्ति- कुलवृद्धि -विजय-सम्पत्तिस्वामी-श्रेष्ठकुला-महद्पुरुषार्थसाधकामानवेषु श्रेष्ठाश्च भवन्ति।

(१०) **सम्यग्दर्शनसम्पन्नमपि मातङ्गदेहजम्।**
**देवा देवं विदुर्भस्मगूढाङ्गारान्तरौजसम्॥**[5]

सम्यग्दर्शनसहितं चाण्डालपुत्रमपि भस्मगूढाङ्गारान्तरौजसमिव आदरणीयमुच्यते। यः जीवः सम्यग्दर्शनयुक्तः भवति सः नारक-तिर्यञ्च-नपुंसक-स्त्री -दुष्कुल-विकलाङ्ग-दरिद्रताल्पायुश्च न व्रजन्ति।

**सम्यग्दर्शनस्य पात्रता-**

सम्यग्दर्शनार्थं पात्रताम् अवगन्तुं पञ्चलब्धीनां वर्णनम् आगतम्। सम्यग्क्त्वप्राप्त्यर्थं विशिष्टयोग्यतानाम् आवश्यकता वर्तते। इयं योग्यताप्राप्तिरेव लब्धिरुच्यते।

**१. क्षयोपशमलब्धिः-** क्षयोपशमस्यार्थोऽस्ति बुद्धिः ज्ञानं वा। सम्यक्त्वप्राप्त्यर्थं संज्ञी

१. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- ३२
२. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- ३४
३. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- ३३
४. समन्तभद्राचार्यः, रत्नकरण्डकश्रावकाचारः, श्लोकः- ३६
५. समन्तभद्राचार्य,ः रत्नकरण्डकश्रावकाचारः, श्लोकः- २८

पञ्चेन्द्रियत्वम् आवश्यकमस्ति।

२. **विशुद्धिलब्धिः**- परिणामाः विशुद्धाः स्युः, मनः निर्मलं स्यात्, कुतर्कादयः न कुर्युः।

३. **देशनालब्धिः**- देशनादातुः आचार्यस्य प्राप्ति। उपदिष्टार्थस्य ग्रहणशक्तेः धारण-शक्तेः विचारणशक्तेश्च प्राप्तिः देशनालब्धिरस्ति।

४. **प्रायोग्यलब्धिः**- यदुपदेशः गृहीतः तस्य प्रयोगकरणम्।

५. **करणलब्धिः**- यदा अस्माकं मनः उपयोगश्च तत्र तस्यां दिशि आत्मनि वा स्याताम्। करणलब्धिं विना सम्यग्दर्शनस्य उत्पत्तिः न भवति।

एकवारं सम्यग्दर्शनप्राप्ते सति जीवेन अनन्तकालपर्यन्तं भवभ्रमणं न करणीयं भवति। तस्य अधिककाधिको अर्द्धपुद्गलपरावर्तनकालमात्रम् एव संसारः अवशिष्टः भवति। तदुपरान्तं नियमेन तं जीवं मोक्षप्राप्तिः भवति।

<u>सम्यग्दृष्टेः अभिज्ञानत्वम्</u>-

**( क ) सम्यग्दृष्टेः चत्वारः गुणाः- प्रशमः संवेगः अनुकम्पा आस्तिक्यञ्च।**

१ ) **प्रशमः**- क्रोधादीनां मन्दत्वं प्रशमभावोऽस्ति। अयं सम्यग्दृष्टेः - परमगुणः वर्तते। 'प्र' इत्यस्यार्थो- उत्कृष्टम्, 'शम' इत्यस्यार्थो 'शान्तः'। अतः विकाराणां सम्यक्तया शान्तिः प्रशमः वर्तते।

२ ) **संवेगः**- संसारदुःखेभ्यः नित्यं भयकरणं संवेग वर्तते। अथवा हर्षस्य सात्त्विकभावस्य च नाम संवेगः वर्तते।

३ ) **अनुकम्पा**- दीनदुःखीजीवान् प्रति करुणाभावः अनुकम्पा गुणो विद्यते।

४ ) **"दीन दुःखी जीवों पर मेरे उर से करुणास्रोत बहे।**[1] "

५ ) **अस्तिक्यम्**- सद्देवशास्त्रगुरुविषये तत्त्वविषये च **'एतानि एतादृशाणि एव सन्ति'**- एवम् आस्थाभावः सम्यग्दृष्टिजीवस्य आस्तिक्यगुणः वर्तते।

**( ख ) सम्यग्दृष्टिः सप्तभयमुक्तः भवति-**

१. **इहलोकः**- अस्य भवस्य सम्बद्धं किमपि भयं स्यात्।

२. **परलोकः**- **'अग्रिमभवे न जाने मम किं भविष्यति'** एतादृशं भयं स्यात्।

३. **अरक्षा**- भो! मम रक्षकः नास्ति, दुःखे कश्चित् सहायको न वर्तते, इदानीं कस्य शरणं गच्छामि एवं भयं स्यात्।

४. **अगुप्तिः**- गुप्तीनां पालनस्य भयं भवति।

---

१. पं.जुगलकिशोरमुख्त्यार, मेरी भावना।

५. **मरणम्**- मरणविषये यत् भयं भवति।

६. **वेदना**- रोगजनितवेदनोत्पन्नस्य आशङ्कातः यत् भयं भवति।

७. **आकस्मिकः**- अकस्मात् या विपत्तिः आगमिष्यति तस्याः आशङ्कातः उत्पन्नं यत् भयमस्ति।

सम्यग्दृष्टिः एतेभ्यः सप्तभयेभ्यः मुक्तः भवति, सः निर्भयः भवति।

**सम्यग्दर्शनस्य भेदद्वयम्**- व्यवहारसम्यग्दर्शनम्, निश्चयसम्यग्दर्शनञ्च।

**व्यवहारसम्यग्दर्शनम्**- एतद् सर्वं यत् वर्णनमुपरि आगतम्- सप्ततत्त्वेषु नवपदार्थेषु सद्देवशास्त्रगुरुषु च यथार्थ श्रद्धानम्, एतानि सर्वाणि व्यवहारसम्यग्दर्शनस्य साधनं विलसति।

**निश्चयसम्यग्दर्शनम्**- आत्मनः (स्वस्य) ज्ञानम्, आत्मनः भूतार्थेन ज्ञानमेव निश्चयसम्यग्दर्शनमस्ति। आत्मानम् अनुभवनम्, आत्मानुभूतिरेव वा यथार्थरूपेण सम्यग्दर्शनमस्ति। आत्मानुभूतौ सति सम्यग्दर्शनं भवति।

व्यवहारसम्यग्दर्शनं साधनम्, निश्चयसम्यग्दर्शनञ्च साध्यमस्ति।

**उपसंहारः**-

एवं प्रकारेण वयं पश्यामः यत् सम्यग्दर्शनं मोक्षमार्गस्य प्रथमं सोपानमस्ति, यत् सप्ततत्त्वानां यथार्थश्रद्धानात् उत्पन्नं, प्राप्तिः, वृद्धिः, स्थितिश्च भवन्ति। ये जनाः निरतिचारत्वेन सम्यग्दर्शनं पालयन्ति, गुणान् धारणं कुर्वन्ति दोषान् च त्यजन्ति ते शीघ्रमेव मोक्षं प्राप्नुवन्ति।

*****

 ISSN 2278-0416

# सिद्धे शब्दार्थसम्बन्धे

*शिवदत्त त्रिपाठी

**जगतो व्यवहारस्य यदुपादानमुच्यते।**
**निमित्तं कर्तृरूपेण शब्दतत्त्वमुपास्महे॥१**
**अर्थव्यवहृतेर्लोके शब्दस्तत्कारणं स्मृतम्।**
**तयोरध्याससंसर्गस्तादात्म्यस्य निबन्धनम्॥२**
**प्रवृत्तिर्वा निवृत्तिर्वा ज्ञानादेवोपजायते।**
**ज्ञानस्य शब्दमूलत्वाच्छब्दोपादानकं जगत्॥३**
**शब्दश्रवणमात्रेणार्थबोधस्य जनिः सदा।**
**तस्माच्छब्दार्थसम्बन्धं नित्यं शास्त्रविदो विदुः॥४**
**उच्चरितप्रतिध्वंसित्वाद् ध्वनिशब्दो न नित्यभाक्।**
**अतः स्फोटात्मकः शब्दो नित्यः शास्त्रेऽभिमन्यते॥५**
**जनिविनाशशालित्वाद् बाह्यार्थोऽपि न नित्यभाक्।**
**तस्माद् बौद्धार्थनित्यत्वं शब्दशास्त्रबुधैः स्मृतम्॥६**
**सम्बन्धस्तात्त्विकस्तेषां शब्दशास्त्रेऽभिमन्यते।**
**तदेवात्र यथाशास्त्रं यथामति निबध्यते॥७**

प्रवृत्तिनिवृत्तिरूपव्यवहारस्य हेतुर्ज्ञानमस्ति। ज्ञातविषयस्यैव प्रवृत्तिनिवृत्ति-प्रयोजकत्वात्। नाज्ञातविषया प्रवृत्तिर्निवृत्तिर्वा सम्भवति। ज्ञाने हेतुः शब्दः। ज्ञानस्य शब्दपूर्वकत्वात्। तथा चोक्तम्-

**"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥"[1]**

लोके तादृशः कश्चनोपदेष्टृबुद्धिस्थो वा लौकिकप्रत्ययो नास्ति। यः शब्दानुवे-

---

* शोधच्छात्र, व्याकरणविभाग, संस्कृतविद्याधर्मविज्ञानसंकाय, का.हि.वि.वि. वाराणसी।

१. वाक्यपदीये १/१२३

धशून्यः स्यात्। निखिलमपि ज्ञानं सूत्रानुविद्धमणिगण इव शब्देनानुविद्धं भासते।

अथ च घटमानय, गां बधान, आदि वाक्यश्रवणोत्तरमेव घटानयनादौ प्रवृत्तिदर्शनात् शब्दः साक्षाद् व्यवहारप्रवर्तकोऽस्ति। मूकादिसङ्केतेष्वपि शब्दमनुमाय शब्दसङ्केतितमर्थमनुगच्छन्ति प्रतिपत्तारः। गवादिपशवोऽपि शब्दसङ्केतितमर्थमनुगच्छन्ति। तथा चोक्तमध्यासभाष्ये[1] "पश्वादयः शब्दादिभिः श्रोत्रादीनां सम्बन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते अनुकूले च प्रवर्तन्ते, अतः शब्द एव सकलव्यवहारप्रवर्तक इति। स च शब्दो द्विविधः। नित्योऽनित्यश्चेति। तत्र ध्वनिव्यङ्ग्यः स्फोटरूपशब्दो नित्यः। उच्चरितप्रतिध्वंसित्वाद् ध्वनिरूपः शब्दोऽनित्यः।

**ध्वनिस्वरूपविचारः-**

कण्ठताल्वाद्यभिघातजन्यः शब्दो ध्वनिरित्युच्यते। यद्यपि भेर्याद्यभिघातजन्ये शब्देऽपि ध्वनिरिति व्यवहारो भवति। तथापि तस्य स्फोटव्यञ्जकत्वाभावान्नात्र विचार्यते। तथा चोक्तं पस्पशाह्निके भाष्ये "प्रतीतपदार्थको लोके ध्वनि शब्द इत्युच्यते। प्रतीतश्चासौ पदार्थश्च प्रतीतपदार्थः स एव प्रतीतपदार्थकः स्वार्थे कन्प्रत्ययः। पदार्थपदस्य तद्बोधके लक्षणा। तदेव प्रसिद्धो गवादिपदार्थबोधक इत्यर्थो लभ्यते। लोके व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः श्रोत्रेन्द्रियग्राह्यत्वाद्वर्णरूपध्वनिसमूह एव शब्दः। तस्यैव शास्त्रेणान्वाख्यानमिति। ध्वनेरुच्चरितप्रतिध्वंसित्वात् साक्षादर्थबोधकत्वाभावेऽपि अर्थबोधकस्फोट-व्यञ्जकत्वेन सार्थक्यमस्ति। वर्णस्य वर्णस्फोटव्यञ्जकत्वेन वर्णसमुदायपदस्य पदस्फोटव्यञ्जकत्वेन पदसमुदायवाक्यस्य वाक्यस्फोटव्यञ्जकत्वेन च सार्थक्यमस्ति। वर्णाः साक्षात् स्फोटव्यञ्जका इति केचित्। ध्वनिस्मारकत्वेन स्फोटव्यञ्जका इत्यन्ये।

**वर्णानामर्थबोधकत्वविचारः-** मीमांसकास्तु वर्णानामेवार्थबोधकत्वमभ्युपगच्छन्ति। तथा चोक्तं श्लोकवार्तिके-

**"विच्छिन्नयत्नव्यङ्ग्यैश्च नित्यैः सर्वगतैरपि।**
**व्यतिरिक्तपदारम्भो वर्णैर्नात्रोपपद्यते॥**
**यावन्तो यादृशो ये च यदर्थप्रतिपादने।**
**वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥"**[2]

अमुं पक्षं भर्तृहरिरपि समर्थयति

**"न वर्णव्यतिरेकेण पदमन्यच्च विद्यते।**

---

१. अध्यासभाष्ये

२. श्लोकवार्तिके

**वाक्यं वर्णपदाभ्यां च व्यतिरिक्तं न किञ्चन॥"**[१]

क्रमजन्मभिरुच्चरितप्रध्वंसिभिरयुगपत्कालैर्ध्वनिभिरभिव्यक्तैः सावयवैरिव पदैः वाक्यम्, तथा क्रमजन्मभिरुच्चरितप्रतिप्रध्वंसिभिरयुगपत्कालैर्ध्वनिभिरभिव्यक्तैर्वर्णैः पदं नारब्धुं शक्यते। यदि पदानि वाक्यस्य वर्णाश्च पदस्यारम्भकाः स्युस्तदा आरब्धारम्भकभावेन भेदः सम्भवेत्। तदेवात्र न सम्भवति। अतः पदातिरिक्तं वाक्यम्, वर्णातिरिक्तञ्च पदं नास्ति। नित्या वर्णा एव पदरूपेण वाक्यरूपेण वा परिणमन्ते। तथा चोक्तं ब्रह्मसूत्रशाङ्करभाष्ये "वर्णा एव शब्द इति भगवानुपवर्षः"[२] यथा ध्वनयो वर्णाभिव्यञ्जकास्तथा वर्णा अपि ध्वनेरभिव्यञ्जकाः सन्ति। ग्रन्थानुविद्धलिपिचिह्नेन वर्णस्मृतिर्जायते। स्मृताश्च वर्णा ध्वनिस्मारका भवन्ति। स्मृताश्च ध्वनयोऽर्थबोधकस्फोटशब्दमभिव्यञ्जयन्ति।

**वर्णानां वाचकनिरासः**- वर्णानां वाचकत्वं न सम्भवति। तथा हि पदघटकाः सर्वे वर्णास्तदर्थस्य वाचकाः, वर्णसमुदायो वा? नाद्यः प्रतिवर्णं वाचकत्वे द्वितीयादिवर्णानामानर्थक्यमापद्येत। न द्वितीयोऽपि उच्चरितप्रतिप्रध्वंसिभिर्ध्वनिभिरभिव्यक्तानां वर्णानां समुदायासम्भवात्। अतस्तदतिरिक्त एव ध्वनिव्यङ्ग्यः स्फोटशब्दोऽर्थवाचक इति। तथा चोक्तम्-

**"नादैराहितबीजायामन्त्येन ध्वनिना सह।**
**आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते॥"**[३]

ह्रस्वत्वदीर्घत्वादयो ध्वनिधर्मा वर्णेष्वारोपिता सन्तो ध्वनिं स्मारयन्ति। स्मृताश्च ध्वनयोऽर्थबोधकस्फोट-शब्दमभिव्यञ्जयन्ति। ध्वनिनिष्ठा ह्रस्वादयो धर्मा अर्थबोधक-शब्देष्वारोप्यन्ते। आरोपित ध्वनिधर्मः स्फोटशब्दस्तत्तदर्थस्य बोधको भवति। तत्र नग इति ध्वनिनाऽभिव्यक्तः स्फोटशब्दो ध्वनिगतह्रस्वत्वधर्मारोपात् पर्वतार्थस्य, नाग इति ध्वनिनाऽभिव्यक्तः स्फोटशब्दो ध्वनिगतदीर्घत्वधर्मारोपात् कुञ्जरार्थस्य बोधको भवति।

**"भागवत्स्वपि तेष्वेव रूपभेदो ध्वनेः क्रमात्।**
**निर्भागेष्वभ्युपायो वा भागभेदकल्पनम्॥"**[४]

ध्वनिरूपं शब्दं श्रुत्वा सद्योऽर्थबोधो जायते। अतो ध्वनेरर्थबोधकस्फोटशब्देन सह तादात्म्यप्रत्ययाद् ध्वनेरर्थबोधकत्वं केचिदभ्युपगच्छन्ति।

१. वाक्यपदीये १/६२
२. शा. भा. ब्र. सू. १-३-२८
३. वाक्यपदीये १/८४
४. वाक्यपदीये १/९२

**"स्फोटरूपाविभागेन ध्वनेर्ग्रहणमिष्यते।**
**कैश्चिद् ध्वनिरसंवेद्यः स्वतन्त्रोऽन्यैः कल्पितः॥"**[१]

वस्तुतस्तु स्फोटशब्द एवार्थबोधकः, न वर्णा ध्वनयो वा।

**सिद्धशब्दविचारः**- सिद्धे शब्दार्थसम्बन्धे वाक्यघटकसिद्धशब्दो नित्यपर्यायवाची। सिद्धे शब्दे सिद्धेऽर्थे सिद्धे सम्बन्धे च शब्दशास्त्रं प्रवर्तते। तत्र कः सिद्धः शब्दः वर्णो ध्वनिः स्फोटशब्दो वा? वर्णो न नित्यशब्दस्तस्योत्पत्तिविनाशशालित्वात्। न ध्वनेरपि न नित्यत्वं तस्याप्युच्चरितप्रतिध्वंसित्वात्। अतो ध्वनिव्यङ्ग्यः स्फोटशब्दो नित्यः। तस्योत्पत्तिविनाशरहितत्वान् नित्यत्वाभिगमात्।

**"अविकारस्य शब्दस्य निमित्तैर्विकृतो ध्वनिः।**
**उपलब्धौ निमित्तत्वमुपयाति प्रकाशवत्"॥**[२]

यथा प्रदीपप्रकाशः स्वसंयुक्तान् प्रागवस्थितान् घटपटादिविषयान् प्रकाशयति। तथैव स्वजनकस्थानकरणाभिघातैरुत्थितो ध्वनिर्वर्णपदवाक्यस्फोटव्यक्तीरभिव्यञ्जयति। ध्वनिभिरभिव्यक्ताः स्फोटशब्दव्यक्तयोऽर्थबोधाय क्षमन्ते। ध्वनिव्यङ्ग्यत्वे सत्यर्थबोधकत्वमिति स्फोटलक्षणं शब्दव्यक्तिष्वपि सङ्गतम्। ते च स्फोटव्यक्तयो नित्या इति।

वस्तुतस्तु पराया वाच एव नित्यत्वमस्ति। तस्याः सर्वविकल्पशून्यत्वात्। परावाग्घि सर्वशब्दानामर्थानाञ्च मूलमस्ति। सर्वेऽर्थाः शब्दाश्च परायां वाचि क्रमशून्याः समवलीयन्ते। ततश्च वक्तुर्विवक्षितार्थबोधाय परावाक् तत्तर्थबोधकशब्दरूपेण विवर्तते। परावाक् स्वतोऽर्थबोधेऽक्षमा। अतः परावाचो विवर्तभूताः स्फोटरूपाः शब्दा अर्थाभिधायका भवन्ति। ते च परावाचो जायमाना अपि परावाचो विषमसत्ताकत्वाद्विवर्ता इत्युच्यन्ते। तथा हि नाभिदेशस्था स्पन्दशून्या विन्दुरूपिणी हि परावाग् नाभिदेशस्थेन वायुना व्यञ्जिता सती योगिवेद्यपश्यन्तीरूपतामापद्यते। कुण्डलिनीभेदेन जन्यशब्दरूपत्वात् पश्यन्तीवाग् अनाहतनादरूपा योगिभिः समाधावगम्यते। सा च प्राकृतवैकृतभेदेन द्विधा। तत्र वैकृतपश्यन्त्या योगिनोऽनाहतनादं श्रुत्वाऽऽनन्दमनुभवन्ति। प्राकृतपश्यन्ती तु परावाग्रूपैवास्ति। तत्र शब्दार्थयोर्भेदासम्भवात्।

**"वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।**
**अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्॥"**[३]

---

१. वाक्यपदीये १/८१

२. वाक्यपदीये १/९४

३. वाक्यपदीये १/१४३

वाचस्त्वित्वपक्षे प्राकृतपश्यन्ती शब्दार्थयोराश्रयभूता सकलविकारशून्या परावागुच्यते। तथा चोक्तं हरिवृषभेण–

**"अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा।**
**स्वस्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी॥**
**सेयमाकीर्णमाणापि नित्यमागन्तुकैर्मलैः।**
**अन्त्या कलेव सोमस्य नात्यन्तमभिभूयते॥"**[१]

या पश्यन्ती वाक् प्राकृतवैकृतभागाभ्यां विभक्ता सा योगिनां सविकल्पकसमाधिविषया। अपरा च सर्वैरवेद्या स्वयंस्वप्रकाशस्वभावा सूक्ष्मा पश्यन्ती सैव परब्रह्मस्वरूपा सर्वव्यवहारात्मकजगत उत्पत्तिलयस्थानमस्ति। सा चार्थात्मकजागतिक-व्यवहारस्योपादानकारणम्, कर्तृत्वेन च निमित्तकारणमस्ति। साऽऽगन्तुकैर्दोषैः सोमस्यान्तिमा कलेव न दुष्यते। यथा परमात्मनि सबीजजगदध्यस्तम्। परञ्चात्मतत्त्वमध्यस्तानात्मगुणैर्दोषैर्वा न संश्लिष्यते। तद्वत् परावाग्रूपा पश्यन्ती ध्वनिगतधर्मैर्न सम्बध्यते।

नागेशभट्टः परापश्यन्तीमध्यमावैखरीभेदेन वाचश्चातुर्विध्यं मन्यते।

**"परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।**
**हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥"**[२]

उत्पत्तिविनाशशून्यायाः परावाच एवावान्तररूपाणि पश्यन्तीमध्यमावैखरीवाक्स्वरूपाणि। अविकृतस्वरूपा नित्या हि परावाक्। सा च स्वयमर्थबोधनेऽक्षमापि मध्यमादिरूपेणार्थबोधाय क्षमते। अतः परावाच एव नित्यत्वं न मध्यमादिवाच इति। सकलशब्दार्थबीजभूता परावाक् सर्वव्यवहारहेतुत्वाज्ज्ञानस्वरूपा वेदरूपा चास्ति।

**"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥"**[३]

अत्र स्मृतौ वाचोऽनादिनिधनत्वं प्रतिपाद्य ततोऽर्थात्मकसकलव्यवहारप्रवृत्तिः प्रतिपादिता। अतः परा वागेव नित्या।

**अर्थनित्यत्वविचारः**– अर्थोऽपि द्विधः। बुद्धिस्थो बौद्धः व्यवहारविषयीभूतो बाह्यश्च। तत्र घटादिरूपस्य बाह्यार्थस्योत्पत्तिविनाशशालित्वान्नित्यत्वं न सम्भवति। अतो बौद्धार्थो नित्यः। बाह्यार्थेषु विनष्टेष्वपि बौद्धार्थो न हीयते। अत एव विदेशगतस्य

---

१. वाक्यपदीये हरिवृषभकृतस्वोपज्ञवृत्तौ
२. मञ्जूषाग्रन्थे
३. स्मृतिः शा. भा. ब्र. सू. १-२-८

भर्तुर्मृतेऽपि मरणवृत्तान्तज्ञानाभावाद् भार्या सौभाग्यं दधाति। बाह्यार्थेषु घटादिषु विनष्टेष्वपि बुद्धिस्थो घटाद्यर्थोऽवतिष्ठते।

**सम्बन्धनित्यत्वविचारः**- अस्ति कश्चित् शब्दार्थयोर्नियतसम्बन्धो येन शब्दश्रवणोत्तरं सद्योऽर्थसम्प्रत्ययो भवति। शब्दो वाचकोऽर्थश्च वाच्यः। अयमेव वाच्यवाचकभावसम्बन्धो वैयाकरणमते शक्तिरित्यभिधीयते। स च सम्बन्धः कार्य-कारणात्मको योग्यताभावरूपश्च। सम्बन्धोऽयं शब्दार्थयोरङ्गसद्धर्मे बोधे च हेतुर्भवति। कार्यकारणात्मको यथा घटशब्दोच्चारिते श्रोतुः श्रवणेन्द्रियेण सन्निकर्षे च सति श्रोतृबुद्धौ कम्बुग्रीवादिमत्पदार्थोऽवभासते। तत्रोच्चरितो घटशब्दो घटरूपार्थस्य कारणम्। एवं वक्ता बुद्धौ गृहीतार्थप्रकाशाय शब्दं प्रयुङ्क्ते, तत्रार्थः शब्दप्रकाशे हेतुः। तथा चार्थाकारबुद्धितः शब्दाकारबुद्धिरुत्पद्यते। बुद्धिविषययोस्तादात्म्यार्थः कारणं शब्दः कार्यमिति। तथा च वार्तिकम् "अर्थप्रयुक्ते अर्थप्रयोगे इत्यर्थः। एवमुभयोः परस्परं कार्यकारणभावः सम्बन्धः। स चायं सम्बन्धोऽभेदमूलकस्तादात्म्यरूपः। योऽयं शब्दः सोऽर्थः, योऽयमर्थः स शब्द इति तादात्म्यप्रतीतेः। स च सम्बन्धः साधुशब्दासाधुशब्दसमानविषयकः।

**"कार्यकारणभावेन योग्यभावेन च स्थिताः।**
**धर्मे च प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु॥"**[1]

यथा साधुशब्देभ्योऽर्थप्रत्ययो भवति, तथैवासाधुशब्देभ्योऽप्यर्थप्रतीतिर्जायते। अतः साधुशब्दैरसाधुशब्दैश्च सहार्थसम्बन्धः समानः। शब्दार्थयोर्योग्यतारूपः सम्बन्धो-ऽप्यस्ति। तथा हि अस्ति काचित्छब्दानामर्थबोधने योग्यताख्या शक्तिर्यया शब्दैरर्थ एव बुध्यते, नान्यत् किमपि। तथा चोक्तम्-

**"इन्द्रियाणां स्वविषयेष्वनादियोग्यता यथा।**
**अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा॥"**[2]

चक्षुरादीन्द्रियाणां चाक्षुषादिस्वविषयेषु यथाऽनादियोग्यता प्रकाशनात्मिका शक्तिः। इन्द्रियं ग्राहकं विषयो ग्राह्यः, तथा शब्दो बोधकः, अर्थो बोध्यः। यथेन्द्रियं प्रकाशकं विषयः प्रकाश्यः तथा कण्ठताल्वाद्यभिघातजन्यध्वनिभिरभिव्यक्तः शब्दोऽर्थप्रकाशक इति। अयमेव प्रकाश्यप्रकाशकभावरूपो योग्यताख्यसम्बन्धः शब्दार्थयोः। स च द्विविधोऽपि साधुशब्दस्यार्थेन सह सम्बन्धो ज्ञाने शास्त्रपूर्वकप्रयोगेण धर्मोत्पत्तौ च हेतुर्भवति। असाधुशब्दानामर्थेन सह यो हि सम्बन्धः स स्वसम्बन्धिशब्दानुमानेन ज्ञानमात्रेऽङ्गं

---

१. वाक्यपदीये १/२५
२. वाक्यपदीयहरिवृषभवृत्तौ

भवति।"असाधुरनुमानेन प्रत्ययोत्पत्तिहेतवः" न तु धर्मोत्पत्तौ हेतवः भवन्ति। "न म्लेच्छितवै नापभाषितवै म्लेच्छो ह्यपशब्दः"[1] इति भाष्यवचनात् एतेनोभावपि सम्बन्धौ साधुशब्देषु ज्ञानस्य धर्मस्य च प्रयोजकौ। अपभ्रंशेषु च ज्ञानमात्रस्येति।

**तादात्म्यसम्बन्धस्वरूपविचारः**- अस्य शब्दस्यायमर्थः शब्दार्थयोर्भेदप्रत्ययात् "घट इति शब्दः, घट इत्यर्थः अभेदप्रत्ययाच्च भेदाभेदात्मकतादात्म्यसम्बन्धः शब्दार्थयोरिति। तत्र भेदो वास्तविकः अभेदश्चाध्यासिकः। भिन्नवस्तुनोरभेदप्रत्ययोऽध्यासः। यथा शुक्तितो भिन्नस्य रजतस्य शुक्तेरभेदेन प्रतीतिरध्यासः। तथैव शब्दाद्भिन्नस्यार्थस्य शब्दाभेदप्रतीतिरध्यासः। तत्राध्यासिकसम्बन्धस्योत्तरज्ञानेन बाध्यत्वान्मिथ्यात्वं शास्त्रकारैरभिमन्यते। अध्यासिकसम्बन्धस्य मिथ्यात्वेऽन्यतरस्य सम्बन्धिनो मिथ्यात्वमभ्युपेयम्। तत्रार्थाधारभूतस्य शब्दस्य मिथ्यात्वं वक्तुं न शक्यते। अतो बाह्यार्थस्यैवाध्यस्तत्वं मिथ्यात्वञ्चास्ति। अर्थस्य शब्दे स्वरूपतः संसर्गतश्चारोपो भवति। शब्दस्य संसर्गतोऽध्यासो न स्वरूपत इति। अतः शब्दस्यार्थेन सह संसर्गो मिथ्या। अध्यासिकसंसर्गेण शब्दार्थयोस्तादात्म्यप्रत्ययः।

**अर्थस्य मिथ्यात्वविचारः**- शुक्तिरजतं यदि बन्ध्यासुतादिवत् असत् स्यात्तदा न बाध्येत। अतः सदसद्विलक्षणत्वात् प्रातिभासिकरजतं मिथ्या। एवमर्थोऽपि यदि असत् तदा न प्रतीयेत। यदि च शब्दब्रह्मवत् सत् स्यात् तदा नायमर्थ इति ज्ञानेन न बाध्येत। अतः सदसद्विलक्षणत्वाद् बाह्योऽर्थो मिथ्या। सर्वत्राधिष्ठानसत्ताऽतिरिक्तसत्ताकत्वाभावोऽध्यस्तपदार्थस्याभिमन्यते। शुक्तिरजतम् इदमवच्छिन्नचैतन्यसत्ताऽतिरिक्तसत्ताशून्यत्वादध्यस्तमित्युच्यते। शब्दमन्तरा केवलस्यार्थस्य प्रतीत्यसम्भवात्, अर्थोऽपि शब्दसत्ताऽतिरिक्तसत्ताशून्यत्वाच्छब्देऽध्यस्यते।

**शब्दस्याधिष्ठानत्वस्वरूपविचारः**- यदाश्रितं यदभिन्नतया च प्रतिभासितं सद् यज्ज्ञानेन निवर्त्यते, तदधिष्ठानमुच्यते। शुक्तिरजतमिदमवच्छिन्नचैतन्याश्रितमिदमवच्छिन्नचैतन्याभिन्नतया प्रतिभासमानं सदिदमवच्छिन्नचैतन्यसाक्षात्कारेण बाध्यतेऽतो मिथ्या। व्यावहारिकप्रपञ्चः सकलविवर्तोपादानाद्वय-ब्रह्माश्रितोऽद्वयब्रह्माभिन्नतया प्रतिभासमानोऽद्वयब्रह्मसाक्षात्कारेण निवर्त्यते। अतोऽद्वयब्रह्म व्यावहारिकप्रपञ्चाधिष्ठानमुच्यते।

एवमर्थोऽपि शब्दाश्रितः शब्दाभिन्नतया प्रतीयमानः शब्दब्रह्मसाक्षात्कारेण निवर्त्यते। अतः शब्दोऽर्थाधिष्ठानमुच्यते। सामान्येन ज्ञातं विशेष्यतयाऽज्ञातमधिष्ठानमुच्यते। शुक्तिरजतस्याधिष्ठानमिदम-वच्छिन्नचैतन्यमिदन्त्वेन ज्ञातं सत् शुक्तित्वेनाज्ञातत्वाच्छुक्ति-

१. पस्पशाह्निके महाभाष्ये

रजतस्याधिष्ठानमुच्यते। व्यावहारिक-प्रपञ्चाधिष्ठानं शुद्धब्रह्म सोपाधिकतया ज्ञातमपि शुद्धबुद्धमुक्तस्वरूपेणाज्ञातत्वाद् व्यावहारिक-प्रपञ्चस्याधिष्ठानमुच्यते। एवं शब्दब्रह्माप्यर्थ-तादात्म्येन ज्ञातमपि सर्वविकल्पातीत-रूपत्वेनाज्ञातमर्थाधिष्ठानमुच्यते।

**तत्त्वविमर्श**:- कः शब्दो नित्यः कश्चार्थो नित्यः कश्च सम्बन्धो नित्य इति तत्त्वविमर्शे शास्त्रानुमोदितसिद्धान्त उपस्थाप्यते। सर्वोपादानभूता परावाङ् नित्या। अर्थश्च बुद्धिस्थो नित्यः। तयोः सम्बन्धो नित्य इति। परावाचः स्फोटशब्दस्य वा बाह्यार्थेन सहाध्यासिकसम्बन्धः। स्फोटशब्देन सह बौद्धार्थस्य नित्यसम्बन्ध इति तत्त्वविमर्शः।

*****

 ISSN 2278-0416

# संस्कृतवाङ्मयसंरक्षणसंवर्धने बीकानेरमहाराजानूपसिंहस्यावदानं तस्य प्रासंगिकता च

*रमनदीपः

सर्वासु भाषासु गीर्वाणवाण्याः गौरवमद्यापि वैलक्षण्येन प्रतिभाति। भाषेयं मातृरूपेण प्रख्यापिता वर्तते। अमृकल्पः कल्याणकारकः वैदिकः ज्ञानस्रोतः अस्यामेव भाषायां सन्निहितो वर्तते। एतस्याः सर्वविधं वाङ्मय-वैभवम् अतिविशालं वर्तते। अस्याः भाषायाः वाङ्मयं नाशयितुं काले काले आक्रान्तारः समुपस्थिताः, किञ्च अद्यापि इयम् अविच्छिन्नरूपेण प्रवहमाना स्मृतिपथम् आयाति। यतोहि सांस्कृतिकरिक्थस्य निर्माणे साहित्यस्य अपूर्वं योगदानं भवति। अतः साहित्यस्य संरक्षणम् अत्यावश्यकं कार्यं वर्तते। अस्यां साहित्य-संरक्षण-श्रृंखलायां बीकानेरस्य महाराजानूपसिंहस्य अतीव महत्त्वपूर्णं योगदानं वर्तते।

संस्कृतभाषा एतस्याः साहित्यं च शताब्दीनां सततप्रवाहानन्तरमपि राजकीय-संरक्षणेभ्यः चक्रव्यूहेभ्यः च निर्गच्छत् अद्यावधि स्वकीयेन अपूर्ववैभवेन सह गौरवान्वितम् अस्ति, एतत् शास्त्राणां प्रकर्षः ज्ञान-विज्ञानयोः पराकाष्ठायाः उद्गमः च इति कथने नास्ति काचिद् अतिशयोक्तिः। कस्यापि राष्ट्रस्य सांस्कृतिकरिक्थस्य संरक्षणे निर्माणे च तस्य साहित्यस्य अतुलनीयं योगदानं भवति। ताः लिपिबद्धाः रचनाः याभिः अस्माकं स्वसंस्कृतेः इतिहासादीनाञ्च ज्ञानं भवति, साहित्यिकस्रोतांसि इति कथ्यन्ते। प्रायशः साहित्यसर्जनस्य मुख्योद्देश्यं सामाजिकं परिवर्तनं भवति। यस्यां कष्टकरीवेलायां मानवीयमूल्यानाम् अनुभूतेः धाराः शुष्का भवति तदा उत्तमोत्तमसाहित्यम् एव आंतरिकसंवेदनानां सेचने फलने च आर्द्रतायाः कार्यं करोति। वस्तुतः संस्कृतभाषायाः साहित्यं तु अतिविशालं वर्तते, अमूल्यग्रन्थरत्नानाम् आगारोऽस्ति। सृष्टेः आदौ ऋग्वेदादारभ्य इदानीं यावत् संस्कृतभाषामाध्यमेन विविधवाङ्मयस्य अनिशं निर्माणं प्रचलति। अस्माकं सांस्कृतिक-सामाजिक-दार्शनिक-आध्यात्मिक-राजनीतिक-धार्मिकजीवनस्य उन्नतेः सोपानानां सम्पूर्णव्याख्या संस्कृतवाङ्मये उपलब्धास्ति। अस्माकं प्राचीना शास्त्रशिक्षणपद्धतिः

* शोधच्छात्रा, केन्द्रीयसंस्कृतविश्वविद्यालयः श्रीरघुनाथकीर्तिपरिसरः, उत्तराखण्डः।

एतावती महती वर्तते यत् अद्यापि अस्यां जगतौ ये नूतनाविष्काराः भवन्ति, तेभ्यो बृहत्तमानि महत्तमानि च कार्याणि अस्माकं पूर्वजैः महर्षिभिः सम्पादितानि आसन्।

काले काले एतावत् बृहत्तमं वाङ्मयं नाशयितुं नैकवारं वैदेशिकानां शत्रूणां प्रहारः अभवत्। यदा अस्माकं भारतदेशे उच्चशिक्षायाः वर्णनम् आयाति तदा निसर्गतया प्राचीनगुरुकुलपरम्परायां तक्षशिला-नालन्दासदृशानां विश्वविद्यालयानां स्मरणं पुरः आयाति, ये निःशुल्कज्ञानयज्ञेन अष्टौ शताब्दीः यावत् न केवलं स्वदेशस्थानां किञ्च वैदेशिकानां ज्ञानपिपासुशिष्याणामपि मार्गदर्शनं कृतवन्तः। अस्मिन् नव(9)तलात्मके धर्मगूंज-नामकपुस्तकालये सहस्रशः पुस्तकानि नवतिलक्षपरिमिताः पाण्डुलिपयश्च आसन्। परं महद्दुर्भाग्यं यत् तुर्काक्रान्ता बख्तियारखिलजिः अस्य शिक्षाकेन्द्रस्य आत्मरूपं पुस्तकालयं दग्धवान्, कियान् महान् ज्ञानराशिः भस्मीभूतः, एतस्यानुमानमपि न कर्तुं शक्यते।

मुगलकालेऽपि अस्माकं साहित्ये संस्कृतौ चैवंविधाः प्रहाराः बाहुल्येन दृष्टिपथम् आयान्ति। नियंत्रणहीनस्य मदोन्मत्तस्य हठधर्मिणः अवरङ्गजेबस्य शासनकालः भारतीयानां कृते अतिभयावहः आसीत्। प्रजायां त्राहि माम - त्राहि मामेति आर्तनादस्य कोलाहलः आसीत्, बलात् धर्मपरिवर्तनं कुर्वन्ति स्म, मठमंदिराणां विध्वंसनं कुर्वन्ति स्म, करं गृहणन्ति स्म, स्त्रीणां चरित्रनाशं कुर्वन्ति स्म, सांस्कृतिकप्रतीकानां नाशं कुर्वन्ति स्म। ईदृश्यां विघ्नकरी-वेलायां विद्वद्भिः लिखितानां ग्रन्थानां सुरक्षायाः अपेक्षा कुतः आसीत् ? अवरङ्गजेबस्य साम्प्रदायिकः उन्मादः एतावानधिकः आसीत् यत् दक्षिणदिशां प्रति तस्याक्रमणकाले ब्राह्मणाः ग्रन्थनाशभयात् बिभ्यति स्म, म्लेच्छैः पुस्तकानां विनाशं भविष्यतीति ज्ञात्वा तेषां जलप्रवहणमेव श्रेयस्करम् अवगच्छन्ति स्म। संस्कृतग्रन्थानां विनाशे सति हिंदूसंस्कृतेः विनाशस्य पूर्णाशङ्का आसीत्। मुगलाक्रान्तॄणां काले राजानः प्रायशः तेषां दास्यं स्वीकुर्वन्ति स्म अन्यथा तु मरणमेव तेषां शरणमासीन्नापरम्। तेषु दिवसेषु बीकानेरस्य महाराजानूपसिंहस्य नियुक्तिः दक्षिणप्रदेशे एवासीत्। अमुष्यां परिस्थितौ वीरविद्यानुरागी महाराजानूपसिंहः ब्राह्मणेभ्यः प्रचुरं धनं दत्त्वा, तेभ्यः पुस्तकानां क्रयणं च कृत्वा तान् ग्रन्थान् बीकानेरस्य दुर्गस्थिते पुस्तकभांडागारे प्रेषितवान्।

**महाराजानूपसिंहस्य परिचयः** -अस्मिन् समये भारतवर्षे सप्तमशताब्द्याः प्रचलितः इस्लामसम्प्रदायः प्रचण्डरूपेण व्याप्तः आसीत्। भारते बाहुल्येन मुस्लिमाक्रमणकारिणां शासनमासीत्। नैकमपि राज्यमीदृशमासीत् यत् वैदेशिकानाम् तुर्क-मंगोल-मुगलाक्रमण-कारिणां आधिपत्येन विहीनम् आसीत्। एवं सति बीकानेरस्य राज्येऽपि मुगलसाम्राज्यस्य अधिकारः आसीत् अतः अनिच्छया तत्रत्याः शासकाः अपि परम्परया मुगलानाम्

अधीनत्वम् एव स्वीकुर्वन्ति स्म। ईदृशस्य दम्भिनः शासकावरङ्गजेबस्य शासनकाले राज्ञः कर्णसिंहस्य तथा च रुक्मांगदचन्द्रावत-सुपुत्रीकमलादेव्ययोः गृहे ज्येष्ठकुमारः अनूपसिंहः १६९५ तमे विक्रमाब्दे चैत्रमासस्य शुक्लपक्षे षष्ठ्यां तिथौ (१६३८ तमे ईसवीयाब्दे मार्चमासस्य ११ दिनाङ्के) जनिमलभत। विक्रमसंवत् १७२६ तमे वर्षे स्वपितुः कर्णसिंहस्य मृत्यूपरान्तम् अनूपसिंहः सिंहासनारूढः जातः तथा च औरंगाबाद-बीजापुरप्रदेशे शासनं कृतवान्। यद्यपि तात्कालिकीनां परिस्थितीनामनुसारं मरहटैः सह संजाते युद्धे अनूपसिंहः मुस्लिमपक्षतः युद्धं कृतवान् तथापि क्षत्रियोचितवीरतायाः परिचयं प्रदाय राजपुत्राणामितिहासे गौरवपूर्णं स्थानं प्राप्तवान्।

महाराजानूपसिंहः अवरंगजेबस्य हठधर्मितायाः विरोधी आसीत् तथापि युद्धनीतिविषयककारणात् सः दिल्लीप्रदेशं प्रति स्वसैन्यशक्तेः विकासाय राजनीतिक-संधेः निर्माणाय च प्रयासं कृतवान्। अनूपसिंहस्य पञ्च पुत्राः आसन्- स्वरूपसिंहः सुजानसिंहः रूपसिंहः रूद्रसिंहः आनंदसिंहश्च। १७५५ तमे विक्रमसंवत्सरे ज्येष्ठमासस्य शुक्लपक्षे नवम्यां तिथौ (१६९८ तमे ईसवीयाब्दे मईमासस्य अष्टमदिनाङ्के रविवासरे) आदूणी-प्रदेशे अनूपसिंहस्य देहावसानं जातम्।

**महाराजानूपसिंहस्य विद्यानुरागः-**

अनूपसिंहस्य पूर्वजेषु नैकाः शासकाः विद्यारसिका आसन्, परमनूपसिंहस्य समयेऽस्याः प्रवृत्त्याः विकासः बाहुल्येन अभवत्। स यावान्निर्भीकः आसीत्तावानेव संस्कृतस्य लोकभाषायाः च पण्डितः, विदुषां सम्मानकर्ता संरक्षकश्च आसीत्। तेन स्वयमपि संस्कृतभाषायां पृथक्पृथक्विषयेषु केचन ग्रन्थाः लिखिताः, यथा-

i. अनूपरत्नावलिः (निबन्धः)
ii. अनूपकरणः (ज्योतिषम्)
iii. श्राद्धप्रयोगचिन्तामणिः (श्राद्धविषयकः)
iv. संगीतविनोदः (नृत्याध्यायः)
v. शालिग्रामविवेकः (प्रकीर्णकः)
vi. गीतगोविंदस्य 'अनूपोदयः' नाम्नी टीका अपि उपलभ्यते।

नैके संस्कृतविद्वांसः राज्ञः अनूपसिंहस्य अभिधानमाधारीकृत्य संस्कृतविषयस्य ग्रन्थानां लेखनं कृतवन्तः। केषाञ्चित् ज्ञातरचनानां नामानि अधोलिखितानि सन्ति-

i. अनूपव्यवहारसागरः[1] (ज्योतिषशास्त्रम्, १६८९ तमे वर्षे)- दीक्षितो मणिरामः

---

१. कुर्व्वे श्रीमदनूपसिंहवचनात् स्पष्टार्थसंसूचकम्।
चक्रोद्धारमहं मुहूर्तविषये विद्वज्जनानां मुदे॥

(महाराजानूपसिंहस्य आश्रये)

ii. अनूपविलासः (स्मृतिशास्त्रम्) – दीक्षितो मणिरामः

iii. अनूपविलासः (ज्योतिषशास्त्रम्) – गंगारामभट्टपुत्रः मधुसूदनः (महाराजानूपसिंहस्य आश्रये)

iv. अनूपसंगीतरत्नाकरः[१] (संगीतशास्त्रम्) – भावभट्टः

v. अनूपरागसागरः[२] (संगीतशास्त्रम्) – भावभट्टः

vi. अनूपसंगीतवर्तमानः (संगीतशास्त्रम्) – भावभट्टः

vii. अनूपसंगीतविलासः (संगीतशास्त्रम् – नवमोऽध्याय) – भावभट्टः (महाराजानूपसिंहस्य आश्रये)

viii. अनूपसंगीताङ्कुशः[३] (संगीतशास्त्रम्) – भावभट्टः

ix. अनूपोद्देशः (संगीतशास्त्रम्) – भावभट्टसुपुत्रः गोस्वामिन् रघुनाथभट्टः

x. अनूपमहोदधिः[४] (ज्योतिषशास्त्रम्) – वीरसिंहगणकः जोशीरायः (महाराजानूपसिंहस्य आश्रये)

xi. अनूपमेघमाला (ज्योतिषशास्त्रम्) – भट्टहोसिङ्गरामः (महाराजानूपसिंहस्य आश्रये)

xii. अनूपविवेकः – भट्टहोसिङ्गरामः

xiii. अनूपकुतुकार्णवः (ज्योतिषशास्त्रम्) – भट्टहोसिङ्गरामः

xiv. अनूपरत्नाकरः (प्रकीर्णकः – शकुन..शालिग्राम..गजलक्षणम्) – विद्यानाथः

xv. अनूपयशोवर्णनम् (लघुकाव्यम्) – पेरुशास्त्रिन्

xvi. अनूपसिंहगुणावतारः – विट्ठलकृष्णः विद्यावागीशः

इतः परं बहवो हि एतादृशाः ग्रंथाः सन्ति येषां निर्माणं स्वयं राज्ञा अनूपसिंहेन अथ वा तेषामाश्रितकविभिः कृतमस्ति इति विषये अध्यवसायः सम्यक्तया कर्तुं न शक्यते, तासु काश्चन रचनाः अधोलिखिताः सन्ति –

---

१. नवाध्यायेषु (स्वर, राग, प्रकीर्णक, प्रबंध, वाद्य, ताल, नृत्य, नाटक, रस)।

२. ऋषिवेदाङ्कभूवर्षेऽनूपसागरसंज्ञकः।
लिखापितः शोधितश्च रामचन्द्रेण धीमता।। (On the Front Page)

३. अनूपाङ्कुशग्रन्थस्य लेखनं शोधनं मुदा।
कारितं रामचन्द्रेण मोतीलालानुजेन वै।। (On the First Page)

४. षट्सु तरङ्गेषु विभक्तः (संज्ञाताङ्गः, सद्व्यक्तगणिततरङ्गः, अव्यक्तगणिततरङ्गः, कालमानतरङ्गः, ऋतुनिर्णयतरङ्गः, सप्तर्षिचारतरङ्गः)

i. ज्योत्पत्तिसारः[1] (ज्योतिषशास्त्रम्) – विद्यानाथः
ii. अद्वैतरत्नाकरः (वेदान्तशास्त्रम्) – अनन्तभट्टः
iii. तीर्थरत्नाकरः (तीर्थमाहात्म्यम्) – अनन्तभट्टः
iv. कामप्रबोधः (कामशास्त्रम्) – व्यासजनर्दनः
v. चिकित्सामालतीमाला (आयुर्वेदः) – विश्वनाथपुत्रः होसिङ्गरामः
vi. अमृतमंजरी (आयुर्वेदः) – होसिङ्गरामः
vii. दानरत्नाकरः (धर्मशास्त्रम्) – भट्टहोसिङ्गरामः
viii. संतानकल्पलता (प्रकीर्णक-धर्मशास्त्रम्) – रामहोसिङ्गः
ix. संतानकल्पलता (प्रकीर्णक-धर्मशास्त्रम्) – त्र्यम्बकरायः
x. अलंकारकारिका (अलंकारशास्त्रम्) – जनार्दनसुतः
xi. स्वरलक्षणम् (संगीतशास्त्रम्) – जनार्दनसुतः
xii. पाण्डित्यदर्पणम् (सुभाषितानि – नवमः प्रकाशः, संवत् 1734) – उदयचन्द्रः
xiii. शान्तिसुधाकरः (धर्मशास्त्रम्) – विद्यानाथः
xiv. नष्ठौदिष्टप्रबोधकध्रौपदटीका (संगीतशास्त्रम्) – भावभट्टः
xv. कर्म्मविपाकः (सूर्यारुणस्य केरलीय टीका) – पन्तोजीभट्टः
xvi. पद्धतिकल्पवल्ली (आयुर्वेदः) – त्र्यम्बकदैवज्ञः

अनूपसिंहस्य राजस्थानीभाषायां महती प्रीतिः आसीत्। तेन स्वपितुः कार्यकाले एव शुकसारिका नाम्नः संस्कृतग्रंथस्य द्विसप्ततिः कथानां 'सुआ बहोत्तरी' इतिनाम्ना राजस्थानी भाषायाम् अनुवादः कारितः, परञ्च पुस्तकस्य अनुवादकर्त्रा कुत्रापि स्वपरिचयः न दत्तः। राज्ञः अनूपसिंहस्य कुमारावस्थायामेव तस्य वैतालिकः (चारणः) ठाकुरसीओतः वीरभानः वेलिया-गीतेषु 'राजकुमार अनोपसिंह री वेल' इत्यस्य रचनां कृतवान्। अस्य गीतानां संख्या एकचत्वारिंशत् (४१) अस्ति। अनूपसिंहस्य शासनकाले 'वेतालपच्चीसी' कथाग्रन्थस्य कथानां काव्यमिश्रितं मारवाडी भाषायां गद्यानुवादो विहितः।

जोशीरायः 'शुकसारिका' ग्रन्थस्य संस्कृतकथानां काव्यमिश्रिते मारवाडीगद्ये 'दंपतिविनोद' नाम्ना अनुवादं कृतवान्। प्रस्तुतग्रंथे स्त्रीपुरुषयोः दूषणानि चित्रितानि सन्ति। एभ्यः परम् अनूपसिंहस्य आज्ञया 'दूहा रत्नाकर' नाम्ना श्रृंगारादि-रसयुक्तानां

१. नत्वा श्रीमदनूपसिंहनृपतेराज्ञावशाादद्भुतम्।
वक्ष्ये शेषविशेषसहितं ज्योत्पत्तिसारं परम्॥

पृथक्पृथक्विषयाधारितानां दोहानां संग्रहणं जातम्। राज्ञ अनूपसिंहस्य आश्रये एव नाजरः आनंदरामः श्रीधरकृतायाः टीकायाः आधारे भगवद्गीतायाः गद्य-पद्यानुवादं कृतवान्।

अनूपसिंहः न केवलं संस्कृतज्ञः एव अपि तु संगीतज्ञोऽप्यासीत्। मुगलशासकस्य अवरङ्गजेबस्य शासनकाले संगीतविदां सत्कारः नासीत्। तस्य हठधर्मितायाः कारणात् संगीतस्य अत्यधिकः विरोधः अभवत्। अत एव शाहीदरबारस्य संगीतज्ञैः जयपुर-बीकानेरादि-राज्येषु आश्रयः गृहीतः। तस्मिन् समये शाहजहानस्य प्रसिद्धः संगीताचार्यः जनार्दनभट्टस्य पुत्रः भावभट्टः[1] (संगीतरायः) अनूपसिंहस्य राजसभायां गत्वा निवासम् अकरोत्, तेन तत्र निम्नग्रन्थाः रचिताः-

i. संगीतानूपांकुशः

ii. अनूपसंगीतविलासः

iii. अनूपसंगीतरत्नाकरः

iv. नष्टौदिष्टप्रबोधकध्रौपदटीका।

मेवाडस्य महाराणा कुंभकर्ण (कुंभा) द्वारा निर्मितानां संगीतग्रंथानां सम्पूर्णसंग्रहः केवलं बीकानेरस्य पुस्तकभांडारे एव उपलब्धोऽस्ति। एवंविधाः अन्येऽपि अलभ्यग्रन्थाः तत्र विद्यमानाः सन्ति।

**अनूपसंस्कृतपुस्तकालये संरक्षितग्रन्थानां वर्णनं प्रासंगिकता च-** १८८० तमे ईसवीयसंवत्सरे कोलकातानगर्याः प्रसिद्धः पुरातत्ववेत्ता डॉ. राजेंद्रलालमित्रः अस्य बृहत्संग्रहस्य बहूनां संस्कृतपुस्तकानां सूचिपत्रं ७४५ पृष्ठेषु मुद्रणं कारयित्वा कोलकातायाः प्रकाशनं कारितवान्। संग्रहेऽस्मिन् राजस्थानीभाषायाः पुस्तकानामपि विशालसंग्रहोऽस्ति, येषां सूचिपत्रम् इदानीं यावत् प्रकाशितं नाभवत्।

तदनन्तरं १९४४ तमे वर्षे डा. सी. कुन्हनराज्ञा, के. माधवशर्मणा अपि बहूनां संस्कृतपुस्तकानां ५०० पृष्ठात्मकं सूचिपत्रं गवर्नमेन्ट-पब्लिशर्स-बीकानेरतः मुद्रणं कारयित्वा प्रकाशनं कारितम्। अस्यां सूचौ प्रायशः ६५ विषयेषु ६५८२ पुस्तकानां विशालसंग्रहोऽस्ति। एषु वेदविषयिकी (७५०), आयुर्वेदस्य (५४३), धर्म- शास्त्रस्य

---

१. स्तोकं मुद्रामुरीकृत्य सा(र्ध) वर्षत्रयात्मिका।
श्रीमाननूपसिंहस्याज्ञ(ज्ञ)या ग्रन्थद्वयं कृतम्।।१।।
एकोऽनूपविलासाख्योऽनूपरत्नाङ्कुरः परः।
अनूपांकुशनामायं ग्रन्थो निष्पाद्यतेऽधुना।।२।।

(८३०), ज्योतिषशास्त्रस्य (९८७), व्याकरणस्य (३२४), दर्शनशास्त्रस्य (७८८), नीतिशास्त्रस्य (४०), कोशस्य (१०६), छन्दसां (७३), अलंकारशास्त्रस्य (१९६), साहित्यस्य (५६१) इतिहासादीनाञ्च (५५१) नैकानि पुस्तकानि उपलब्धानि सन्ति।

दक्षिणप्रदेशे यत्र-कुत्रापि मुस्लिमाक्रान्तृणां सैन्यशक्तिः हिंदूमठमंदिराणां ध्वंसनं कुर्वती तेषां मूर्तीनामपि नाशं करोति स्म। ईदृशे प्रसङ्गे सति महाराजानूपसिंहः स्वदक्षिणनिवासकाले बहुमूल्यानां पृथक्पृथक्धातुभिः निर्मितानां मूर्तीनां रक्षणमपि अकरोत् तथा च तान् बीकानेर-संग्रहालयं प्रति प्रेषितवान्। बीकानेरदुर्गस्य एकस्मिन् स्थाने विविधानां मूर्तीनां संरक्षणम् अधुनापि वर्तते तथा च तत्स्थानं '३३ कोटि देवताओं का मंदिर' नाम्ना प्रसिद्धिं याति। महाराजानूपसिंहसदृशाः विद्यारसिकाः विद्वांसः, विदुषामाश्रय-दातारश्च राजानः अस्मिन् राजस्थाने स्वल्पाः एव संजाताः, अनया दृष्ट्या तेषां यशः संसारेऽस्मिन् सर्वदैव अमरतां यास्यति।

वस्तुतः साहित्यिकसंरक्षणाय अनूपसिंहस्य सर्वाधिकं स्मरणं भविष्यति। तेषां जीवने अदम्यतीव्रोत्साहस्य प्रयोजनं सत्तालौलुप्यं नासीत् अपि तु साहित्यसंगीतयोः संरक्षणम् आसीत्। स्वदूरदर्शितायाः साहित्यिकप्रवृत्तेश्च कारणादेव ते भारतीयसांस्कृति-केतिहासस्य विकासाय स्वीयं सहयोगं प्रदत्तवन्तः। एकस्मिन् पक्षे निरङ्कुशः अवरङ्गजेबः मदोन्मत्तहठधर्मितया हिन्दूनां बलात् मतपरिवर्तनं कृत्वा अत्याचारं करोति स्म, हिंदुविद्वत्जनान् तङ्कयति स्म, भारतस्य महत्तमां सांस्कृतिकधरोहरं नाशयति स्म, तत्र अपरस्मिन् पक्षे अनूपसिंहः स्वकुलानुगतस्य राजपूतीशौर्यस्य प्रदर्शनं कुर्वन् अवरङ्गजेबस्य विरोधम् अकरोत्। अत्याचारेभ्यः भीतान् शरणागतान् जनान् सुरक्षाप्रदानेन स्वकीये मरुस्थलीयराज्ये सुरक्षितम् आश्रयमपि प्रदत्तवान्।

भूपानूपः विविधविषयकान् संगीतकलाप्रभृतिभ्यः गद्यपद्यचिकित्सादि-शास्त्रपर्यन्तान् शताधिकान् बहुमूल्यसंस्कृतपांडुलिप्यादीन् ग्रंथान् नाशादपात्। अमुष्य संगीतप्रेमिनृपस्य अभावे सति हिंदीभाषायां लिखिताः अगणितशास्त्रीयसंगीतविषयकग्रंथाः मन्ये विलुप्तिं प्राप्तवन्तः स्युरथवा लिपिबद्धा एव न स्युः। तेषाम् उदारसंरक्षणे विद्वांसः स्वानुसंधा-नकार्यस्य पुनर्नवीकरणं कृतवन्तः। कप्तानपावलेटस्यानुसारम् एतद्युगं बीकानेरस्य स्वर्णयुगम् आसीत्। ३०० वर्षानन्तरमपि लालगढप्रासादे स्थितम् अनूपसंस्कृतपुस्तकालये स्थापितानां पांडुलिपीनां संधारणम् अद्यत्वेऽपि बीकानेरराजपरिवारेण क्रियते। महदाश्चर्यमेतत् यदेते अतिपुरातनाः संवेदनशीलाश्च ग्रंथाः विगतेभ्यः तिसृभ्यः शताब्दीभ्यः जीविताः सन्ति तथा च अद्यापि प्रायः सम्यगवस्थायामेव सन्ति, किञ्च अनूपसिंहस्य वंशजेषु

महाराज्ञः गंगासिंहपर्यन्तं न तु साहित्यं प्रति कस्यापि रुचिः आसीत् न च ते साहित्यस्य मूल्याववबोधकाः आसन्। एवम् उच्यते यत्तेषां पुस्तकानाम् अस्तित्वविषये (यानि एकस्मिन् लघुकक्षे अव्यवस्थितावस्थायामासन्) राज्ञः गंगासिंहस्येकः सहायकः तान् सूचितवान् तदा राज्ञा गंगासिंहेन तेषां मूल्यं महत्त्वं च ज्ञात्वा तत्क्षणे एव कुंदनराजा एतन्नामकं विद्वांसमाहूय तानि पुस्तकानि सूचीबद्धानि व्यवस्थितानि च कर्तुमुक्तम् तथा च तेषां स्थापनार्थम् उपयुक्तं कक्षमपि निर्धारितम्।

**निष्कर्षः** – वस्तुतः राजानूपसिंहकृतं वाङ्मयसंरक्षणकार्यं कियत्महत्त्वपूर्णमासीत् एतत् सएवावगन्तुं शक्नोति, यः बीकानेरपुस्तकालय-दर्शनस्य लब्धावसरोऽस्ति। कथनस्यावश्यकता नास्ति यत् अनूपसदृशाणां विद्यारसिकानां भूपानां प्रयासानन्तरमेव पुस्तकालयेऽस्मिन् ईदृशानि बहुमूल्यग्रन्थरत्नानि सुरक्षितानि सन्ति, येषामन्यत्र प्राप्तिः दुर्लभास्ति। ईदृशानां महनीयग्रन्थरत्नानां भाविजीवनाय संरक्षणम् अस्माकमपि परमकर्त्तव्यमस्ति। अद्यापि भारतीयाः वैदेशिकाश्च विद्वांसः अत्र शोधकार्यार्थम् आगच्छन्ति।

**आकरग्रन्थाः** –

१. बीकानेर राज्य का इतिहास-महामहोपाध्याय रायबहादुर गौरीशंकर हीराचंद ओझा
२. बीकानेर के महाराजा – राज्यश्री कुमारी बीकानेर
३. कर्मचन्द्रवंशोत्कीर्तनकं काव्यम् – कवि जयसोम
४. The Relations of the House of Bikaner with Central Powers – डॉ. करणी सिंह

*****

 ISSN 2278-0416

# श्रवणादिश्रुतिविषये भामतीकारमतवैशिष्ट्यम्

*डॉ. तुलसीकुमार जोशी

भारतीयदर्शनजगति सर्वतन्त्रस्वतन्त्राणां श्रीवाचस्पतिमिश्राणां ग्रन्थास्तत्तद्दर्शन-तत्वप्रकाशकत्वेन स्थिता इति तु स्फुटमेव तत्तद्दर्शनशास्त्राध्येतॄणाम्। किमु वक्तव्यमेतैर्विर-चितानां ग्रन्थानां स्वपक्षसाधनपरपक्षनिराकरणयुक्त्या तत्तद्दर्शनप्रतिपाद्यविषयप्रकाशने यादृशमनितरसाधारणसामर्थ्यं वर्तते न तादृशमन्यत्रावलोक्यते। अत एवैतेषां ग्रन्थानां प्रामाण्यं निजनिजनयमनुसृत्य सर्वैरपि दार्शनिकैरङ्गीक्रियते। शास्त्रान्तरवत् वेदान्तशास्त्रस्यापि तत्त्वावबोधने एतेषामाचार्याणामस्ति महानुपकारः। यद्यपि अन्येऽपि प्रामाणिका आचार्याः व्यवहारसिद्धविषयेषु विविधाः प्रक्रिया आश्रित्य वेदान्तशास्त्रीय- सिद्धान्तप्रकाशनेन लोकानुपकृतवन्तस्तथाप्येतेषामाचार्याणां क्वचिदन्याचार्यमतापेक्षया विलक्षणैव प्रक्रिया दृश्यते। तत्र किमेतेषां प्रक्रियायाः वैशिष्ट्यं वर्तते कथञ्च अन्यमतैरगतार्थता इत्यादिविषयमाश्रित्य इदं शोधपत्रं मया प्रस्तूयते।

श्रीमतां सर्वतन्त्रस्वतन्त्राणां वाचस्पतिमिश्राणां मतं कस्मिंश्चित् विषयविशेषनिरूपणे कीदृशं वैशिष्ट्यं बिभर्तीति तु अन्येषामाचार्याणां तस्मिन् विषयविशेषे अभिप्रायविशेषज्ञानमन्तरा न हि ज्ञातुं शक्यते। अतोऽत्र पत्रे मया यत्र विषये वाचस्पतिमिश्राणां मतं प्रदर्शनीयं तस्मिन् विषये अन्येषामपि आचार्याणां संक्षेपेण मतानि निरूप्य तैः सह मिश्रमतस्य साम्यवैषम्यप्रदर्शनपूर्वकं वैशिष्ट्यं प्रतिपादयिष्यते। तत्र पूर्वोक्तं क्रममाश्रित्य सर्वादौ श्रोतव्यो मन्तव्यः निदिध्यासितव्य इति श्रुत्यर्थविषये मिश्रमतं यथामति प्रस्तूयते-

श्रवणादौ विधिरस्ति न वेति विषये अद्वैतसिद्धान्तानुयायिभिस्तत्तदाचार्यैः विविधानि मतानि प्रतिपादितानि। तत्र प्रकटार्थकारादयः श्रवणादौ अपूर्वविधिमङ्गीकुर्वन्ति संक्षेपशारीरकाचार्याः एवं विवरणानुयायिनश्च श्रवणादौ नियमविधिमङ्गीकुर्वन्ति, वार्तिकवचनानुसारिभिः श्रवणादौ परिसङ्ख्याविधिस्स्वीक्रियते किन्तु भामतीकाराः सर्वमतविलक्षणतया श्रवणादौ विधिमेव नाङ्गीकुर्वन्ति। तत्र श्रवणादौ विध्यनङ्गीकारे ये हेतवस्तैरुपन्यस्यन्ते तेऽत्र संक्षेपेण प्रदर्श्यन्ते-

*Assistant Professor Department of Sanskrit Vasanta College for women KFI, Rajghat, Varanasi.

**श्रवणादौ विध्यभावे युक्तयः**

**आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः**[१] इति श्रुतौ श्रवणादिकर्मतया आत्मनः साक्षाच्छ्रुतत्वात् श्रवणस्य मननादिवज्ज्ञानरूपत्वमेव स्वीकर्तव्यं न तु विचाररूपत्वं विचारस्य अनुष्ठेयक्रियारूपस्य साक्षादात्मविषयकत्वासम्भवात्। विचारस्य हि साक्षाद्विषयः वेदान्ततात्पर्यं न त्वात्मा। विचारस्य क्रियारूपत्वात् तस्य च क्रियाफलभूतोत्पत्त्याद्यन्यतमसंस्पर्शशून्य आत्मा न साक्षाद्विषयो भवितुमर्हति। तथा च श्रवणस्य ज्ञानरूपत्वं स्वीकार्यमेव। एवञ्च ज्ञानरूपश्रवणस्य च कृतिविधेयत्वानुपपत्तेः न तत्र कोऽपि विधिस्सम्भवतीति भामतीकाराणामभिप्रायः। अस्मिन् भामतीकारप्रतिपादित-सिद्धान्ते भाष्यकाराणामपि सम्मतिरस्ति। तथाहि- समन्वयसूत्रे भाष्ये भगवता भाष्यकारेण ज्ञानस्य विधित्वनिरासानन्तरमुक्तं- "किमर्थानि तर्हि 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यः' इत्यादीनि वचनानि विधिच्छायानि? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः। यो हि बहिर्मुखः प्रवर्तते पुरुषः 'इष्टं मे भूयादनिष्टं मा भूत्' इति, न च तत्रात्यन्तिकं पुरुषार्थं लभते तमात्यन्तिकं पुरुषार्थवाञ्छिनं स्वाभाविकात्कार्यकरणसङ्घात-प्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति"[२] इति। एतद्भाष्यग्रन्थेन श्रवणादौ विध्यभावः स्पष्टं प्रतिपादितः। अत्रेयं शङ्का स्यात् यत् श्रवणादौ विध्यभावे किमर्थानि श्रोतव्य इत्यादीनि वचनानि विधिच्छायानि पठ्यन्ते न च वेदवाक्यानाम् अनर्थकत्वं युक्तम् अनर्थकत्वे स्वाध्यायाध्ययनविधिनास्य ग्रहणं न स्यात् अतः किञ्चित् प्रयोजनमवश्यं वक्तव्यं तच्च प्रयोजनं भाष्यकारैः स्वाभाविकेत्यादिग्रन्थेन प्रतिपादितम्। अस्य ग्रन्थस्याशयं स्फुटीकुर्वद्भिः श्रीमद्भिर्वाचस्पतिमिश्रैरुक्तं यत् "**अन्यतः प्राप्ता एव हि श्रवणादयो विधिसरूपैर्वाक्यैरनूद्यन्ते। न चानुवादोऽप्यप्रयोजनः, प्रवृत्तिविशेषकरत्वात्। तथाहि -तत्तदिष्टानिष्टविषयेप्साजिहासापहृतहृदयतया बहिर्मुखो न प्रत्यगात्मनि समा-धातुमर्हति। आत्मश्रवणादिविधिसरूपैस्तु वचनैर्मनसो विषयस्रोतः खिलीकृत्य प्रत्यगात्मस्रोत उद्घाट्यत इति प्रवृत्तिविशेषकरता अनुवादानामस्तीति सप्रयोजनतया स्वाध्यायविध्यधीनग्रहणत्वमुपपद्यत इति।**"[३]

१. The Brihadaranyakopanishad (Upanishadbhashyam -Vol-3) with the bhashya of Shankaracharya, edited by Shri S. Subrahmanya Shastri, published by Mahesh Research Institute- २-४-५ Page no.193

२. ब्रह्मसूत्र शाङ्करभाष्यरत्नप्रभा, सम्पादक-पण्डित श्रीकृष्णपन्त शास्त्री, प्रकाशक -अच्युतग्रन्थमाला कार्यालय, काशी, पृष्ठसङ्ख्या - १९२

३. The Bhamati, A Gloss on Shankara Bhashya By Vachaspati Mishra, edited by Pt. Dhundhiraj Shastri Nyayopadhyaya, Part-1 published by Jaya Krishna Das Haridas Gupta, Varanasi (1935) page no. 69-70.

एवञ्च श्रवणादौ विध्यभावेऽपि श्रोतव्य इत्यादिवाक्यानां न नैरर्थक्यं बाह्यविषयेभ्यः प्रवृत्तिविमुखीकरणद्वारा प्रत्यगात्मसमाधाने प्रवृत्तिसम्पादकतया तेषां वाक्यानां सार्थकत्वात्।

**श्रवणस्य विचाररूपत्वाङ्गीकारेऽपि तत्र विधेयत्वासम्भवः**

श्रवणस्य विचाररूपत्वेऽपि तत्र विधिर्न सम्भवति फलाभावात्। न च आत्मज्ञानमेव विचारस्य फलमिति कथं फलाभावात् विचारात्मकस्य श्रवणस्य विधित्वं न सम्भवतीत्युच्यते इति चेत् न विचारस्य आत्मज्ञानं फलं न सम्भवति ज्ञानस्य प्रमाणफलत्वात् विचारस्य च प्रमाणत्वाभावात्।न च तात्पर्य-निर्णयानुकूलन्यायविचारात्मकचेतोवृत्तिविशेषरूपविचारावधारिततात्पर्यविशिष्टशब्दज्ञानस्यैव श्रवणत्वमस्तु तस्य च प्रमाणरूपतया ब्रह्मज्ञानफलकत्वं न विरुद्धमिति चेदत्रोच्यते एवमपि श्रवणस्य ज्ञानरूपतापत्तौ तस्य पूर्वोक्तरीत्या कृतिविधेयतानुपपत्तेः विधेयत्वासम्भवस्य तदवस्थत्वात्।

ननु विचारस्यात्मज्ञानफलकत्वाभावेऽपि विचारस्य तात्पर्यनिर्णयद्वारा यत् तात्पर्यभ्रमसंशयरूपं आत्मज्ञानप्रतिबन्धकं तन्निवृत्तिरेव फलमस्तु तथा च तन्निवृत्त्यर्थमेव श्रवणे विधिरस्त्विति चेत्तदपि न वक्तुं शक्यते। तथाहि-न तावत् श्रवणे अपूर्वविधिर्वक्तुम् शक्यते-तात्पर्यनिर्णयस्य तात्पर्यभ्रमसंशयनिवृत्तिं प्रति कारणत्वस्य लोकत एव सिद्धेः अज्ञातार्थज्ञापकत्वाभावात् श्रवणे अपूर्वविधिर्न सम्भवति। नापि तात्पर्यभ्रमादिनिरासार्थं साधनान्तरं किञ्चित्प्राप्तमिति विकल्प्य समुच्चित्य वा साधनान्तरप्राप्तेरभावात् अप्राप्तांशपूरणफलकत्वाद्यभावेन श्रवणस्य नियमत्वं परिसङ्ख्यात्वं वा न सम्भवतीति विधित्रयस्याप्यनवकाशात् श्रवणे कोऽपि विधिः न सम्भवति।

**नियमविधिवादिनां मतम्-**

श्रवणे नियमविधिवादिभिः नियमविधेर्बहुविधं व्यावर्त्यं प्रदर्श्य श्रवणे नियमविधेस्सार्थक्यमुपपादितम्। तत्सर्वमपि व्यावर्त्यं मिश्रानुयायिभिः अन्यथैवोपपाद्यते। तदिह क्रमेण निरूप्यते- तथाहि-श्रवणे नियमविध्यभावे गुर्वधीनवेदान्तविचारवत् गुरुरहितवेदान्तविचारोऽपि पक्षे प्राप्तः तस्य गुरुरहितवेदान्तविचारस्य व्यावृत्त्यर्थं श्रवणे नियमविधिरपेक्षितः। किञ्च स्वप्रयत्नमात्रसाध्यविचारव्यावृत्त्यर्थं वा श्रवणे नियमविधिरभ्युपेयः।तथाहि यथा गुरुमुखाधीनश्रवणेन सत्तानिश्चयरूपं ब्रह्मापरोक्षज्ञानं जायते तथा कस्यचिन्निपुणस्य स्वप्रयत्नमात्रसाध्यविचारादपि सत्तानिश्चयरूपं ब्रह्मज्ञानं सम्भवति। किन्तु स्वप्रयत्नमात्रसाध्यविचाराज्जायमानं यत् सत्तानिश्चयरूपं ब्रह्मज्ञानं तदज्ञानानिवर्तकं सत् परोक्षज्ञानकल्पमेवावतिष्ठते। गुरुमुखाधीनवेदान्तश्रवणनियमेन तु जन्यं यददृष्टं तत् अविद्यानिवृत्तिं प्रति कल्मषनिरासार्थमुपयुज्यते इति स्वप्रयत्नमात्रसाध्यविचारस्यापि पक्षे प्राप्तत्वात्

तद्व्यावृत्त्यर्थं गुरुमुखाधीनवेदान्तविचारनियमार्थं श्रवणे नियमविधिः स्वीकरणीयः। अथवा द्वैतशास्त्रेऽपि द्वैतिनामभिमतयोजनया वेदान्ततात्पर्यार्थस्य निरूपिततया तात्पर्यभ्रमादिनिरासार्थं वेदान्ततात्पर्यार्थनिर्णयार्थिनां कदाचिद्द्वैतशास्त्रविचारेऽपि प्रवृत्तिः स्यादिति तादृशप्रवृत्ति-व्यावृत्त्यर्थम् वेदान्ततात्पर्यार्थनिर्णयार्थम् अद्वैतात्मपरवेदान्तविचार एव कर्तव्य इति नियमार्थं श्रवणे नियमविधिरस्तु।

**परिसंख्याविधिवादिनां मतम्-**

परिसंख्याविधिवादिभिरुच्यते यत् यथा चिकित्साज्ञानार्थं चरकसुश्रुतादिशास्त्रश्रवणे प्रवृत्तस्य पुरुषस्य व्यापारान्तरेऽपि प्रवृत्तिर्भवति तद्वत् ब्रह्मज्ञानार्थं वेदान्तश्रवणे प्रवृत्तस्य पुरुषस्य मध्ये व्यापारान्तरेऽपि प्रवृत्तिः प्रसज्यत इति तादृशप्रवृत्तिनिवृत्त्यर्थं श्रवणे परिसङ्ख्याविधिरभ्युपगम्यते। अत्रेयमाशङ्का जायते यत् यथा चिकित्साज्ञानार्थं चरकसुश्रुतादिग्रन्थश्रवणे प्रवृत्तस्य पुरुषस्य व्यापारान्तरे प्रवृत्तिसत्त्वेऽपि चिकित्साज्ञानं निराबाधमुत्पद्यते तद्वत् ब्रह्मज्ञानार्थं वेदान्तश्रवणेऽपि प्रवृत्तस्य पुरुषस्य लौकिकवैदिक-व्यापारान्तरसत्त्वेऽपि ब्रह्मज्ञानसम्भवात् न श्रवणे परिसङ्ख्याविधिः स्वीकर्तव्य इति चेदत्रोच्यते परिसङ्ख्याविधेस्सार्थक्याय निरन्तरानुष्ठितश्रवणस्यैव ब्रह्मज्ञानार्थत्वाभ्युपगमात् व्यापारान्तरे प्रवृत्तस्य तदसम्भवात् तद्व्यावृत्त्यर्थं परिसङ्ख्याविध्यभ्युपगमस्यावश्यकत्वात्।

**श्रोतव्यग्रन्थविषये नियमविधिरिति पक्षः**

केचित् विचाररूपश्रवणे नियमविधेरसम्भवेऽपि विचार्यनियमार्थं श्रवणे नियमवि-धिमभ्युपगच्छन्ति। तथाहि- अद्वैतात्मजिज्ञासुभिः अद्वैतात्मप्रतिपादकग्रन्थे प्रवृत्तेरावश्यकतया वेदान्तग्रन्थानां यथा विचारः प्राप्तः तथा भाषाप्रबन्धादिग्रन्थप्रतिपाद्यार्थविचारोऽपि प्राप्त इति तद्व्यावृत्त्यर्थं वेदान्तश्रवणे नियमविधेः सार्थक्यं वर्णयन्ति। तथा च अद्वैतं जिज्ञासमानेन वेदान्ता एव विचारणीयाः न तु भाषाप्रबन्धा इत्येवं नियमार्थं श्रवणे नियमविधिः सम्भवति।

**अपूर्वविधिवादिपक्षः**

**प्रकटार्थविवरणकारादयः** श्रवणे अपूर्वविधिं मन्यन्ते। तेषां मते श्रवणस्य श्रोतव्यार्थविषयकज्ञानं प्रति कारणत्वस्य लोकतः असिद्धत्वात् ब्रह्मसाक्षात्कारं प्रति श्रवणस्य अपूर्वं कारणत्वं श्रुत्या बोध्यत इति श्रोतव्य इत्यत्र अपूर्वविधिरेव आश्रयणीयः। सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदिति सूत्रभाष्येऽपि "विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवत् विधिरेवाश्रयितव्यः अपूर्वत्वात्"[1] इत्यत्र अपूर्वत्वहेतुं प्रदर्शयद्भिः

१. ब्रह्मसूत्र शाङ्करभाष्यरत्नप्रभा, सम्पादक-पण्डित श्रीकृष्णपन्त शास्त्री, प्रकाशक -अच्युतग्रन्थमाला कार्यालय, काशी,- सूत्रसंख्या - ३-४-४७

भाष्यकारैः श्रवणे अपूर्वविधिरेव सूचितः।

**वाचस्पतिमिश्रमतेन नियमविधिदूषणम्-**

गुरुरहितवेदान्ताध्ययनव्यावृत्त्यर्थं गुर्वधीनवेदान्तविचारनियमविधिरादर्तव्य इति पक्षो न युक्तः। गुर्वधीनवेदान्तविचारस्य प्राप्तत्वात्। तथाहि- तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् श्रोत्रियं ब्रह्मनिष्ठमि[१] ति श्रुत्या तद्विज्ञानोद्देश्येन गुर्वधिगमनं विधीयते। तद्विज्ञानञ्च गुरूपगमनमात्रेण न सिद्ध्यतीति विज्ञानसाधनीभूतं द्वारं किञ्चिन्मध्ये कल्पनीयम्। तच्च द्वारं गुरोरुपदेशकत्वात् विचाररूपमेव कल्प्यते। विचारस्य विचार्यार्थनिर्णयहेतुताया लोकतोऽपि सिद्धत्वात्। तथा च दृष्टद्वारसम्भवे अदृष्टद्वारकल्पनाया अन्याय्यत्वात् विचारस्य दृष्टद्वातयैव प्राप्तत्वात् तदर्थं श्रवणे विध्यपेक्षा नास्ति। किञ्च तद्विज्ञानार्थमिति श्रुतौ एवकारस्य श्रुततया स्वप्रयत्नमात्रसाध्यवेदान्तविचारस्य तेन व्यावृत्तिः सिद्ध्यति। तेन स्वप्रयत्नमात्रसाध्यवेदान्तविचाराद् ब्रह्मज्ञानसम्भवेऽपि अविद्यारूपकल्मषनिरासार्थं श्रोतव्य इति नियमविधिजन्यनियमादृष्टमावश्यकमिति मतमपि निरस्तम्। एवकारेण गुर्वभिगमनप्रयुक्तगुरुमुखाधीनवेदाविचारातिरिक्तोपायस्य विज्ञानं प्रति कारणत्वनिरासात् स्वप्रयत्नमात्रसाध्यवेदान्तविचारव्यावृत्त्यर्थं श्रोतव्य इत्यत्र नियमविधिरनावश्यकः। ननु यथा गुरूपसदनविधिनैव स्वप्रयत्नमात्रसाध्यवेदान्तविचारस्य व्यावृत्तिस्तद्वत् अष्टवर्षो ब्राह्मणः गुरुमुपगच्छेदिति गुरूपगमनविधिना अक्षरावाप्तेरपि सिद्धौ स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिरपि निरर्थकः स्यादिति चेदत्रोच्यते गुरूपगमनविधौ अक्षरावाप्तिरूप-फलस्यानिर्देशात् न तेन गुरुमुखाधीनोच्चारणानूच्चारणरूपमध्ययनं द्वारीकर्तुं शक्यते। तथा च स्वाध्यायविध्यभावे लिखितपाठादिनाऽपि अक्षरावाप्तेः प्रसक्तौ तद्व्यावृत्त्यर्थं गुरुमुखाधीनोच्चारणानूच्चारण-रूपाध्ययननियमार्थम् अध्ययननियमविधिरावश्यकः। तद्विज्ञानार्थमिति श्रुतौ तु विज्ञानरूपफलस्य निर्देशात् गुरूपसदनमात्रेण तदसिद्ध्या तदर्थं गुरुमुखाधीनवेदान्तविचाररूपं द्वारमवश्यं कल्पनीयमिति तदर्थं श्रवणे विधिर्नापेक्षितः। ननु वेदान्ततात्पर्यार्थनिर्णयार्थं द्वैतशास्त्रविचाररूपस्य साधनस्यापि प्रसक्त्या अद्वैतात्म-विचारनियमः सार्थक इति द्वैतशास्त्रविचाररूपसाधनान्तरस्य व्यावृत्त्यर्थमेव श्रवणवि-धेस्सार्थक्यमिति चेदत्रोच्यते यस्य द्वैतशास्त्रविचारे वेदान्ततात्पर्यनिर्णयहेतुत्वभ्रमो वर्तते तादृशभ्रमप्रयुक्ता च यस्य द्वैतशास्त्रश्रवणे प्रवृत्तिस्तस्य भ्रमप्रयुक्तायाः प्रवृत्तेः विधिशते-

---

१. Upanishadbhashyam-Vol-1 with the bhashya of Shankaracharya, edited by Shri S. Subrahmanya Shastri, published by Mahesh Research Institute- २-४-५, सूत्रसंख्या- १-२-१२

नापि वारयितुमशक्यतया नियमविधेरवकाशाभावात् किञ्च तादृशभ्रमवतः पुरुषस्य श्रोतव्यवाक्येऽपि सद्वितीयब्रह्म एव ज्ञातव्यतयोपदिश्यते अतः भिन्नात्मप्रतिपादकशास्त्रविचार एव कर्तव्य इत्यपि भ्रमसम्भवेन नियमविधेस्सार्थक्योपपादनं दुरुपपादम्।

**परिसङ्ख्याविधिदूषणम्-**

यदुक्तं व्यापारान्तरनिवृत्त्यर्थं परिसङ्ख्याविधिः स्वीक्रियते इति तत्र इदं प्रष्टव्यं कस्य व्यापारान्तरनिवृत्त्यर्थं परिसङ्ख्यविधिरुच्यते सन्न्यासिनो व्यापारान्तरनिवृत्त्यर्थं वा असन्न्यासिनो गृहस्थादेर्व्यापारान्तरनिवृत्त्यर्थं वा। यदि असन्न्यासिनो गृहस्थादेर्व्यापारान्तर-निवृत्त्यर्थमित्युच्यते तथासति तन्न वक्तुं शक्यते। असन्न्यासिनो गृहस्थादेर्व्यापारान्तर-निवृत्त्यर्थत्वे तेषां अवश्यकर्तव्यकर्मविधायकविध्यन्तरविरोधापात्तिः। यदि च सन्न्यासिनो व्यापारान्तरनिवृत्त्यर्थं श्रवणे परिसङ्ख्याविधिरभ्युपेयते चेत् तर्हि तादृशनिवृत्तेः सन्न्यास-विधायकेन ब्रह्मसंस्थोऽमृतत्वमेतीति श्रुत्यन्तरेण सिद्धत्वात् श्रोतव्यवाक्येन व्यापारान्तर-निवृत्त्युपदेशः व्यर्थः स्यात्। ननु ब्रह्मसंस्थोऽमृतत्वमेति शास्त्रं सन्न्यासविधायकं श्रोतव्य इतिविधिस्तु व्यापारान्तरनिवर्तक इति शास्त्रद्वयेनापि व्यापारान्तरनिवृत्तिर्भवतु, श्रोतव्य इति शास्त्रस्य परिसङ्ख्याविधित्वमस्तु को दोष इति चेत् अत्रोच्यते ब्रह्मसंस्थोऽमृतत्व-मेतीत्यनेन व्यापारान्तरनिवृत्तिः क्रियते इत्यत्र सन्देहाभावेऽपि श्रोतव्य इत्यनेन व्यापारान्तरनिवृत्तिः क्रियते इत्यत्र प्रमाणत्वेन परिसङ्ख्यावादिभिः ब्रह्मसंस्थोऽमृतत्वमेतीति श्रुतिरेव प्रदर्श्यते तथा च सन्न्यासविधायकश्रुत्यन्तरमपेक्ष्य श्रोतव्य इति वाक्येन व्यापारान्तरनिवृत्त्युपदेशः व्यर्थ एव।

**श्रोतव्यग्रन्थविषये नियमविधित्वनिरासः-**

ननु विचारस्य लोकतः प्राप्तत्वेऽपि वेदान्ता एव विचार्या इति विचार्यविषये नियमविधिरस्तु तथा च भाषाप्रबन्धादीनां व्यावृत्तिरेव नियमविधेः फलं सम्भवतीति चेत् अत्रोच्यते विचारेण ब्रह्म ज्ञातव्यमिति वेदान्ते एव अवगतं तथा च कस्य विचारेण इति जिज्ञासायां वेदान्तानामेवोपस्थितत्वात् भाषाप्रबन्धादीनामनुपस्थितत्वात् उपस्थितं परित्यज्य अनुपस्थितकल्पनाया अन्याय्यत्वात् वेदान्ता एव विचार्यविषयत्वेन प्राप्ताः न तु भाषाप्रबन्धादय इति तद्व्यावृत्त्यर्थं विचार्यविषये नियमविधिकल्पनेऽपि मानाभावात्। किञ्च यदि स्वेच्छया वेदान्तान् त्यक्त्वा भाषाप्रबन्धाः विचार्यन्ते चेत् तथा सति अध्ययनेनैव वेदार्थावबोधः सम्पादनीयः इत्यर्थकेन स्वाध्यायोऽध्येतव्यः इति नियमवि-धिना वेदप्रतिपाद्यस्य अर्थस्य ज्ञानं वेदेनैव सम्पादनीयतया धर्मवद्ब्रह्मापि वेदेनैवागन्तव्य इति नियमेन भाषाप्रबन्धादीनां व्यावृत्तिसिद्धौ तदर्थं श्रोतव्यार्थविषये नियमविधिकल्पनस्य

अयुक्तत्वात्।

**सूत्रभाष्यविरोधपरिहारः-**

ननु सूत्रकारैरेव **सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्**[1] इति सूत्रेण मौने विधिरुक्तः बाल्यपाण्डित्ययोश्च दृष्टान्ततयोपादानं कृतम्। अपि च भाष्यकारैरपि "विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवद्विधिरेवाश्रयितव्यः, अपूर्वत्वात्" इति भाष्येण अपूर्वत्वहेतुना मौने अन्यत्र च विधिराश्रितः। तथा च श्रवणादौ विधेर-नङ्गीकारे सूत्रभाष्यविरोधः स्यादिति चेदत्रोच्यते- सहकार्यन्तरविधिरितिसूत्रे विधि शब्दः गौणः न मुख्यार्थबोधकः। अयम्भावः- श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादीनां प्रवृत्त्यतिशय- करत्वेन विधिसादृश्यात् विधित्वव्यवहारः न तु मुख्यस्तत्र विधि-त्वव्यवहारः। यथा उपांशुयाजमन्तरा यजति इत्याम्नाय पुनराम्नायते- विष्णुरुपांशु यष्टव्यः, प्रजापतिरुपांशु यष्टव्यः, अग्नीषोमावुपांशु यष्टव्यौ इति। अत्र अन्तरावाक्यमेव यागवि-धायकं विष्णुरुपांशु यष्टव्य इत्यादिवाक्यत्रयं तु अन्तरावाक्यविहितयागस्तावकमात्रमिति तेषां यथा प्रवृत्त्यतिशयकरत्वं तद्वत् श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादीनामपि प्रवृत्त्यतिशयकरत्वम्। किञ्च विचारस्य विचार्यतात्पर्यार्थनिर्णयहेतुत्वस्य लोकतः सिद्धत्वात् वस्तुसिद्ध्यनुकूलयुक्त्यनुसन्धानरूपमननस्य तत्प्रत्ययाभ्यासरूपनिदिध्यासनस्य वस्त्वगम-वैशद्यहेतुत्वस्य च लोकसिद्धत्वेन तत्र विध्यनपेक्षणात्।

**निष्कर्षः-**

इत्थं सूत्रभाष्याभ्यां सहापि प्रतीयमानस्य विरोधस्य परिहर्तुं शक्यत्वात् श्रवणादौ विधिर्नाङ्गीकर्तव्यः इति मिश्राशयः। अत्र नियमविधिवादिभिः नियमविधिसमर्थनाय भ्रान्तिसिद्धसाधनान्तरव्यावृत्तिं स्वीकृत्यापि नियमविधिः समर्थ्यते तदुक्तं सिद्धान्तलेशसङ्ग्रहे नियमविधित्वसमर्थनावसरे- "न हि वस्तुसत्साधनान्तरप्राप्तावेव नियमविधिरिति कुल-धर्मः"[2] तथा च तेषां मते भ्रान्त्या साधनान्तरे प्रवृत्तिकाले वस्तुसत्साधने प्रवृत्त्यभावात् पक्षेऽप्राप्तस्य वस्तुसत्साधनस्य प्रापणं नियमविधिना भवति। किन्तु भ्रान्तिप्रयुक्तसा-धनान्तरस्य नियमेनापि वारणं न सम्भवतीति तदर्थं नियमविधिकल्पनं व्यर्थमेवेति मिश्राणामाशयः प्रतिभातीति सुधियो विभायन्तु।

*****

---

१. ब्रह्मसूत्र शाङ्करभाष्यरत्नप्रभा, सम्पादक-पण्डित श्रीकृष्णपन्त शास्त्री, प्रकाशक-अच्युतग्रन्थमाला कार्यालय, काशी, ३-४-४७

२. सिद्धान्तलेशसङ्ग्रहः - प्रथमपरिच्छेदः - श्रवणविधिविचारः

 ISSN 2278-0416

# समीचीनोच्चारणाय भाषाप्रयोगशाला

*डॉ. जोगेश्वरमहान्तः

**पत्रसारांशः**

शोधपत्रमिदं भाषाप्रयोगशालासम्बन्धितं वर्त्तते। अधिगमकर्त्तुः भाषाकौशलविकासाय इयं भाषाप्रयोगशाला उपकारिका। कक्षाकक्षस्य पाठन-पठनञ्चातिरिच्य कानिचित् कार्याणि महत्वपूर्णानि सन्ति। शोधपत्रमिदं भाषाप्रयोगशालायाः गुण-दोषान् वर्णयति। साम्प्रतिकयुगे शैक्षिकसंस्थासु प्रयोगशालायाः अनिवार्यता दृश्यते। उच्चारणकाठिन्य-मनुभवन्तः छात्राः स्वल्पाधिगमसम्पन्नाः छात्राश्च भाषाप्रयोगशालाद्वारा उपकृताः भवन्ति। अस्याः प्रक्रियाः संसूचिताः सन्ति।

सामान्यतः विज्ञानस्य विषयेषु भौतिकविज्ञानं, रसायनविज्ञानं, जीवविज्ञानञ्चान्त-र्भवन्ति। एतेषां विषयाणां व्यावहारिकं ज्ञानं प्राप्तुं प्रयोगशालाः निर्मीयन्ते। प्रयोगशालायां छात्राः विज्ञानसम्बद्धान् विविधप्रयोगान् कृत्वा व्यावहारिकं ज्ञानं प्राप्नुवन्ति। स्वयं कार्यं कृत्वा (Learning by doing) स्वानुभवेन अधिगमः प्राप्यते इति शिक्षणसिद्धान्तम् अनुसृत्य छात्राः समुचितं ज्ञानं लभन्ते। एतेन ज्ञानं स्थायित्वं भजते। परवर्त्तिनिकाले सामाजिकविज्ञानविषयाणां कृतेऽपि प्रयोगशालाः स्थापिताः।

आधुनिककाले भाषाणामध्ययनार्थं ''भाषाविज्ञानम्'' इति विषयः परिकल्पितः। भाषाशिक्षणार्थं भाषाप्रयोगशाला काचित् अभिनवकल्पना वर्त्तते। विज्ञानस्य आविष्कारेण विज्ञानस्य क्षेत्रे प्रौद्योगिकक्षेत्रे च महान् विकासः जातः। इदानीं वैज्ञानिकोपकरणैः प्रयोगशालाः सुसज्जिताः दृश्यन्ते। भाषाप्रयोगशालासु भाषायाः चतुर्षु कौशलेषु श्रवणभाषणकौशलयोः अभ्यासः यन्त्राणां साहाय्येन सम्यग्रूपेण क्रियते। वारम्बारं शब्दानां वाक्यानाञ्च उच्चारणेन छात्राः एतयोः कौशलयोः नैपुण्यं प्राप्नुवन्ति।

सर्वप्रथमम् फ्रान्सदेशस्य ग्रेनोब्ल (Grenoble) विश्वविद्यालये भाषाप्रयोगशालायाः स्थापना जाता। तदनन्तरं इंग्लैण्डदेशे एतस्याः प्रचलनमभवत्। सम्प्रति विश्वस्य सर्वेषु

---

* अध्यापकः, शिक्षाशास्त्रविभागः, श्रीजगन्नाथसंस्कृतविश्वविद्यालयः, श्रीविहारः, पुरी

देशेषु वैदेशिकभाषाणाम् इतरभाषाणाञ्च अध्ययनार्थं भाषाप्रयोगशालायाः उपयोगः भवति।

**भाषाप्रयोगशालायाः सम्प्रत्ययः ( Concept of Language Laboratory )**

भाषाप्रयोगशाला विद्युन्नियत्रितः कश्चन शिक्षणप्रकोष्ठः, यत्र सामूहिकरूपेण भाषाशिक्षणस्य अभ्यासः क्रियते। छात्राः प्रकोष्ठे सामूहिकरूपेण उपविश्य भाषाध्ययनस्य अभ्यासं कुर्वन्ति। भाषाविषयकं मार्गदर्शनञ्च प्राप्नुवन्ति। तत्र छात्राणाम् उपवेशनार्थं कोष्ठकानां (Booth) व्यवस्था भवति, भाषाभ्यासं च कर्तुं श्रव्यदृश्यसाधनानां सौकर्यं भवति। अन्येषु शब्देषु वक्तुं शक्यते यत् भाषा प्रयोगशाला श्रव्यसाधनानां श्रव्यदृश्यसाधनानां वा एकं स्थापनं भवति यस्य उपयोगः सहायकरूपेण आधुनिकभाषाशिक्षणे क्रियते। ''(The language laboratory is an audio or audio-visual installation used as an aid in modern language teaching.) Oxford English Dictionary''[१] इति शब्दकोशस्यानुसारं ''भाषाप्रयोगशाला वैदेशिकभाषाम् अध्येतुं ध्वनिमुद्रणयन्त्रादिभिः सुसज्जितः एकः प्रकोष्ठोऽस्ति।'' (Language laboratory is a room equipped with tape recorders etc. for learning a foreign language.)

भाषाप्रयोगशाला विद्युन्नियन्त्रिता भवति। अत्र उच्चारितस्य भाषणस्य अभ्यासः क्रियते। प्रयोगशालायां छात्राणां सर्वासां क्रियाणां नियन्त्रणं कृत्वा अध्यापकः वैयक्तिकनिर्देशनं ददाति। भाषाप्रयोगशालायां छात्रैः विशिष्टकार्यक्रमाः निर्मीयन्ते। कार्यक्रमनिर्माणात् पूर्वं छात्राणां पूर्वव्यवहारस्याधारेण अनुदेशनोद्देश्यानां निर्धारणं भवति। तदनन्तरं पूर्वनिर्धारितस्य कार्यक्रमस्य क्रियान्वयनं भवति। प्रथमं तावत् ध्वनिमुद्रणयन्त्रमाध्यमेन अध्यापकस्य भाषणस्य व्याख्यानस्य वा मुद्रणं भवति। ततः परं छात्रेभ्यः अनुदेशनं दीयते। छात्राः ध्वनिग्रहणयन्त्रमाध्यमेन अध्यापकस्य भाषणम् उच्चारितशब्दान् वा श्रृण्वन्ति। छात्राः ध्वनिमुद्रिकाः वारम्बारं श्रुत्वा उच्चारणस्य अभ्यासं कुर्वन्ति। छात्राणामुच्चारणं ध्वनिमुद्रणयन्त्रेण मुद्रितं भवति। उच्चारणं श्रुत्वा दोषान् परिष्कृत्य अध्यापकः सम्यग्रूपेण उच्चारणं कर्तुं प्रेरयति। एवं मौखिकं भाषणं श्रुत्वा अनुकरणपूर्वकं सम्यगभ्यासं कृत्वा स्वप्रतिक्रियां प्रकटयितुं छात्राः समर्थाः भवन्ति।

**भाषाप्रयोगशालायाः आवश्यकता ( Need of language laboratory )**

निम्नलिखितानां कृते भाषाप्रयोगशालायाः आवश्यकता वर्तते।

---

१. Oxford Advanced Learner's Dictionary of Current English, Eighth Edition, Oxford University Press-2012 page no-432.

१. प्रयोगशालायां छात्राणां वैयक्तिकभिन्नतादृष्ट्या उच्चारणस्य लेखनस्य च त्रुटीनां संशोधनं क्रियते।
२. छात्राणां सम्प्रेषणकौशलस्य विकासः जायते।
३. स्पष्टोच्चारणस्य कृते श्रवणशक्तेः विकासः क्रियते।
४. प्रयोगशालामाध्यमेन छात्राः उच्चारणस्य भाषणस्य च वारम्बारम् अभ्यासं कुर्वन्ति।
५. कस्याश्चन नूतनभाषायाः क्रमबद्धज्ञानं प्राप्यते।
६. छात्राः सोत्साहेन क्रमबद्धरुपेण च भाषाज्ञानं प्राप्नुवन्ति।
७. भाषाशिक्षणं सरलं, रुचिकरं, व्यावहारिकं च कर्तुं शक्यते। एतदर्थं भाषाप्रयोगशालायाः आवश्यकता स्वीक्रियते।

**भाषाप्रयोगशालायाः स्थापनम्** (Establishment of language laboratory)

भाषाप्रयोगशालायाः स्थापनाय निम्नलिखितोपकरणानां यन्त्राणां च आवश्यकता भवति।[1]

१. चलचित्रम् (Television)
२. संङ्गणकयन्त्रम् (Computer)
३. ध्वनिमुद्रणयन्त्रम् (Tape recorder)
४. दृश्यध्वनिमुद्रणयन्त्रम् (Video Cassette recorder)
५. सान्द्रमुद्रिका (CD)
६. श्रवणयन्त्रम् (Ear Phone)
७. भाषापञ्जिका (Linguaphone)
८. ध्वनिवर्धकयन्त्रम् (Microphone)
९. वर्त्तुलपञ्चिका (Gramphone)
१०. चित्रपत्रम् (Film slide)
११. चित्रपट्टिका (Film Strip)
१२. चित्रप्रक्षेपक (Projector)
१३. कोष्ठकम् (Booth)
१४. विद्युतपिञ्जाः (Electric Switches)
१५. व्यवस्थापनपिञ्जाः (Monitoring Switches)
१६. वितरणपिञ्जाः (Distribution Switches)
१७. अन्तर्गतपिञ्जाः (Intercum Switches)
१८. मुख्यध्वनिमुद्रिका (Master tape recorder)

१. वृन्दावनपात्रः, कक्षासम्प्रेषणम्, तीरतरङ्गप्रकाशनम्, भुबनेश्वरम्, 2008, Page no-49

१९. उत्पीठिका (Table)
२०. आसन्दः (Chair)

भाषाप्रयोगशालायां प्रकोष्ठद्वयं भवति-नियन्त्रणप्रकोष्ठः श्रव्यदृश्यप्रकोष्ठश्च। नियन्त्रणप्रकोष्ठे मुख्यध्वनिमुद्रिका (Master tape) व्यवस्थापनपिञ्जाः, ध्वनिवर्धकयन्त्रम्, अन्यानि च यन्त्राणि भवन्ति। नियन्त्रणप्रकोष्ठोऽपि केन्द्रीयप्रकोष्ठ इत्युच्यते केन्द्रीयप्रकोष्ठे स्थित्वा अध्यापकः दूरवाणीद्वारा सर्वासां क्रियाणां नियन्त्रणं छात्राणां मार्गदर्शनञ्च करोति।

श्रव्यदृश्यप्रकोष्ठे छात्राणां कृते साधारणतया षोडशतः विंशतिपर्यन्तं कोष्ठकाः भवन्ति। एकस्मिन् कोष्ठके एका उत्पीठिका, एकः आसन्दः, एकं ध्वनिमुद्रणयन्त्रम् एकं श्रवणयन्त्रम् एकं ध्वनिवर्धकयन्त्रं च भवन्ति। केन्द्रीयप्रकोष्ठे स्थितैः यन्त्रैः साकं प्रत्येककोष्ठकः संयोज्यते।

**भाषाप्रयोगशालायाः वैशिष्ट्यम्** (Characteristics of Language laboratory)

१.केन्द्रीयप्रकोष्ठः (Central Room) केन्द्रीयप्रकोष्ठे सर्वाणि उपकरणानि उपलभ्यन्ते। तत्र भाषाकौशलानां विकासाय विविधाः क्रियाः सम्पाद्यन्ते। एताः क्रियाः विशेषप्रक्रियाद्वारा भवन्ति। एषा प्रक्रिया श्रवणभाषणप्रक्रिया (Audio-Lingual-Process) इत्युच्यते। अध्यापकः आदर्शध्वनिमुद्रिकामाध्यमेन प्रथमं स्पष्टोच्चारणपूर्वकं शब्दान् भाषणं वा श्रावयति। छात्राः वारम्वारं श्रुत्वा अभ्यासेनैव भाषाकौशलानि प्राप्तुं शक्नुवन्ति।

२. आवृत्तिः भाषाप्रयोगशाला छात्राणाम् आवृत्तिं कर्तुं समुचितमवसरं परिकल्पयति। ध्वनिमुद्रिकां पुनः पुनः श्रोतुं अनुकरणं च कर्तुं आवृत्तेः आवश्यकता भवति। आवृत्तिद्वारा उच्चारणकौशलस्य अभ्यासः क्रियते पुनरावृत्त्यर्थं ध्वनिमुद्रिकां अग्रेचालयितुं पश्चात् चालयितुं स्थगयितुं वा शक्यते।

३.स्वगतिः (Self-Pacing) वैयक्तिकभिन्नतादृष्ट्या सर्वे छात्राः समानाः न भवन्ति। अतः स्वसामर्थ्यानुसारं छात्राः अभ्यासं कृत्वा कौशलानि प्राप्नुवन्ति। प्रतिभाशालिछात्राः स्वल्पे समये अधिगन्तुं पारयन्ति। मन्दबुद्धिछात्राणां कृते अधिकसमयः अपेक्षितः भवति। एतेन छात्राणां वैयक्तिकभिन्नतायाः समस्या दूरीभवति।

४. चयनस्य स्वातन्त्र्यम् (Freedom in Selection) यत्र भाषाप्रयोगशाला विविधैः अधिगमसाधनैः समृद्धा वर्तते तत्र छात्राः अधिगमसाधनानां चयनं स्वतन्त्ररूपेण कर्तुं शक्नुवन्ति। यदि साधनानामभावः परिलक्ष्यते तर्हि परिमितसाधनैः कार्यसम्पादनं कर्तुं शक्यते।

**भाषाप्रयोगशालायाः प्रक्रिया** (Process of language laboratory)

भाषाप्रयोगशालायाः केन्द्रीयप्रकोष्ठे एकं मुख्यध्वनिमुद्रणयन्त्रं भवति । यन्त्रमिदं कोष्ठकेषु विद्यमानैः श्रवणयन्त्रैः सह संयोज्यते। यदा केन्द्रीयप्रकोष्ठात् मुख्यध्वनिमुद्रणयन्त्रद्वारा कोऽपि कार्यक्रमः प्रसार्यते तदा छात्राः श्रवणयन्त्रमाध्यमेन तं कार्यक्रमं शृण्वन्ति। प्रथमं केन्द्रीयप्रकोष्ठे अध्यापकस्य उच्चारणस्य भाषणस्य वा मुख्यध्वनिमुद्रणयन्त्रद्वारा मुद्रणं भवति। ततः परम् अध्यापकः आदर्शध्वनिमुद्रिकां श्रावयति अध्यापकस्य ध्वनिः पुनः एकवारं छात्राणां कोष्ठकेषु विद्यमानैः ध्वनिमुद्रणयन्त्रैः मुद्रिता भवति। एवं मुद्रणं द्विवारं सम्पाद्यते।

छात्राणां प्रकोष्ठेषु स्थितेषु ध्वनिमुद्रणयन्त्रेषु मार्गद्वयं भवति। एकः भवति अध्यापकमार्गः (Master Track) अपरः भवति छात्रमार्गः (Student Track) इति। अध्यापकमार्गः मुख्यमार्ग इत्युच्यते। अध्यापकमार्गमाध्यमेन छात्राः आदर्शध्वनिमुद्रणयन्त्रं शृण्वन्ति। आदर्शध्वनिमुद्रिकां श्रुत्वा तस्य अनुकरणं कुर्वन्ति च। छात्राणां प्रतिक्रिया पुनः ध्वनिमुद्रणयन्त्रेषु मुद्रिता भवति। अध्यापकमार्गः अपरिवर्तितः भवति। परन्तु छात्रमार्गस्य परिवर्तनं कर्तुं शक्यते। अध्यापकमार्गे अध्यापकः छात्रान् प्रेरयति परन्तु छात्रमार्गे छात्रः पुनरावृत्तिं करोति। चित्रमाध्यमेन तत् स्पष्टीकर्तुं शक्यते।[1]




अध्यापकमार्गे एकमार्गिव्यवस्था (One channel system) प्रचलति। एकमार्गिव्यवस्थायां चत्वारि सोपानानि भवन्ति, (क) श्रवणम्, (ख) अनुकरणम्, (ग) श्रवणम्, (घ) पुनरावृत्तिश्च। **प्रथमसोपाने** छात्राः कोष्ठकेषु विद्यमानानि ध्वनिमुद्रणयन्त्राणि चालयित्वा ध्वनिमुद्रिकासु मुद्रितानि उच्चारणानि शृण्वन्ति। **द्वितीयसोपाने** उच्चारणस्यानुकरणं कुर्वन्ति। **तृतीयसोपाने** पुनः ध्वनिमुद्रणं शृण्वन्ति। **चतुर्थसोपाने** पुनरावृत्तिमाध्यमेन स्पष्टरुपेण उच्चारयितुं प्रभवन्ति। छात्राः यदि स्वप्रतिक्रियया सन्तुष्टाः न भवन्ति तर्हि पुनर्मुद्रणं कर्तुं शक्नुवन्ति। एषा व्यवस्था श्रव्य-सक्रिय-तुलनात्मकव्यवस्था (Audio Active-Comparative System) इति कथ्यते।

छात्रमार्गे उभयमार्गिव्यवस्था (Two channel system) स्वीक्रियते। अस्यां व्यवस्थायां

१. रमाकान्तमिश्रः, शैक्षिकप्रविधिः, चौखम्बाप्रकाशनम्, वाराणसी, 2019 , पृ-65

मार्गद्वयं वर्तते। एकस्मिन् मार्गे छात्रप्रतिक्रियाः मुद्रिताः भवन्ति। ध्वनिमुद्रणयन्त्रस्य पुनश्चालनेन छात्रैः स्वप्रतिक्रियां ज्ञातुं शक्यते। एवं छात्राः मुद्रितां प्रतिक्रियाम् आदर्शमुद्रणेन साकं तुलयितुं समर्थाः भवन्ति। अध्यापकः छात्राणां मुद्रितप्रतिक्रियां श्रुत्वा छात्रैः सह सम्बन्धं स्थापयित्वा तेषां नियन्त्रणं च कृत्वा समुचितमार्गदर्शनं कर्तुं शक्नोति। एतादृशीं व्यवस्थां सनियन्त्रित-श्रव्य-सक्रिय-तुलनात्मकव्यवस्था (Audio-Active- Comparative System with control) इति वक्तुं शक्यते। अत्रापि चत्वारि सोपानानि अनुस्रियन्ते। तान्यथा क) श्रवणम्, ख) अनुकरणम्, ग)श्रवणम्, घ) पुनरावृत्तिश्च। प्रत्येकस्मिन् सोपाने कार्यद्वयं भवति। प्रथमे सोपाने श्रवणं सञ्चालनञ्च। द्वितीये अनुकरणम्, छात्रस्य ध्वनेः मुद्रणं च। तृतीये श्रवणं परीक्षणं च। चतुर्थे सोपाने पुनरावृत्तिः छात्रस्य ध्वनेः मुद्रणं च।

**भाषाप्रयोगशालाप्रक्रिया एवं रूपेणापि प्रदर्शयितुं शक्यते।**

I. एकमार्गिव्यवस्थायाम् अभ्यासार्थं पञ्चचरणाः अनुश्रियन्ते ते यथा (क) श्रवणम्, (ख) अनुकरणम् (ग) श्रवणम् (घ) परीक्षणं पुनरावृत्तिश्च। अभ्यासार्थं ध्वनिमुद्रिकायां निर्मितवाक्यानि द्विवारम् अङ्कितानि भवन्ति। प्रथमचरणे छात्रः ध्वनिमुद्रणयन्त्रं सञ्चाल्य ध्वनिमुद्रिकायाम् अङ्कितवाक्यानि शृणोति। पुनः ध्वनिमुद्रिकां स्थगयित्वा द्वितीयचरणे सः श्रुतानां वाक्यानाम् अनुकरणात्मकोच्चारणं करोति। तृतीयचरणे सः ध्वनिमुद्रणयन्त्रे अङ्कितानि तान्येव वाक्यानि पुनः शृणोति, येन तस्य अनुकृतवाक्यानि शुद्धानि आसन् नवेति सः परीक्षितुं प्रभवति। चतुर्थचरणे पुनरावृत्तिरूपेण वाक्यानां शुद्धरूपाणि पुनः उच्चारयति। यदि छात्रः स्वप्रतिक्रियया असन्तुष्टः तर्हि सः पुनः मुद्रणं (Record) कर्तुमर्हति। अधः अङ्कितचित्रमाध्यमेन एतदवगन्तुं शक्यते[1]-

चित्रम्-१




---

१. R. yogendra Fundamental Aspects of Educational Technology, Shipraprakasana, Newdelhi, 2011, Page no-32

**II. उभयमार्गिव्यवस्था-**

छात्रस्य ध्वनिमुद्रणयन्त्रे मार्गद्वयं भवति। एकस्मिन् मार्गे आदर्शमुद्रणं (Master tape) मुद्रितं भवति। अपरस्मिन् मार्गे छात्रप्रतिक्रियाणां मुद्रणं भवति। यदा छात्रः पुनश्चालनं करोति, तदा अध्यापकस्य, स्वस्य च प्रतिक्रियां श्रोतुं शक्नोति। छात्रेण क्रियमाणे मुद्रणसमये पुनर्मुद्रणसमये वा अध्यापकमार्गस्य परिवर्तनं न भवति। तदुपरि पुनर्मुद्रणम् अपि कर्तुं न शक्यते एतादृशकार्यक्रमाः प्रारम्भिकदशायां छात्राणाम् उच्चारणदोषान् परिष्कर्तुं विधीयन्ते। उच्चारणाभ्यासः इत्यस्य अभ्यासस्य

[**चित्रम् -2**

| | | | | |
|---|---|---|---|---|
| अध्यापकमार्गः Master Track | प्रेरणा -१ | X | प्रेरणा -२ | X |
| छात्रमार्गः Student Track | X | पुनः कथनम् १ | X | पुनः कथनम्-२ |

नाम वर्तते उच्चारणाभ्यासम् अवगन्तुम् अत्रैकं चित्रं प्रस्तूयते-

उभयमार्गिव्यवस्थायाम् अभ्यासार्थं चत्वारः चरणाः अनुक्रियन्ते।[१]

१. सञ्चालनं श्रवणञ्च। २. अनुकरणं ध्वनेः मुद्रणञ्च।

३. श्रवणं परीक्षणञ्च। ४. पुनरावृत्तिः ध्वनेः मुद्रणञ्च।

अनेन चित्रेण इयं प्रक्रिया अवगन्तुं शक्यते।

**भाषाप्रयोगशालायाः उपयोगिता** (Utility of language laboratory)

आधुनिककाले कस्यामपि भाषायां दक्षताप्राप्त्यर्थं भाषाप्रयोगशालायाः उपयोगितां निम्नलिखितप्रकारेण स्वीक्रियते।[२]

१. छात्राः वैयक्तिकभिन्नताधारेण स्वगत्या च भाषाशिक्षणं प्राप्तु समर्थाः भवन्ति।

२. छात्राणां श्रवणभाषणयोः क्षमतायां वृद्धिर्जायते।

३. छात्राणाम् अभ्यासार्थम् अधिकावसरः लभ्यते।

४. अध्यापकस्य मार्गदर्शनेन छात्राः अभिप्रेरिताः भवन्ति।

५. एकस्य मार्गदर्शनेन अपरस्य छात्रस्य शिक्षणे बाधा नोत्पद्यते।

---

१. R.A.Sharma, शिक्षा के तकनीकी के आधार, आर् लाल बुक् डिपो, मेरठ, 20111, पृ-119
२. S.C. Oberoi, शैक्षिकतकनीक, आर्य बुक डिपो, करोलबाग, नईदिल्ली, 2008, पृ-555

६. छात्राः स्वदोषाणां निरीक्षणं संशोधनञ्च कर्तुम् अवसरं प्राप्नुवन्ति।
७. अध्यापकस्य अभावेऽपि छात्राः स्वयं शिक्षितुं समर्थाः भवन्ति।
८. पुनः पुनः श्रवणेन उच्चारणं शुद्धं भवितुमर्हति।

**भाषाप्रयोगशालायाः सीमाः** (Limitations of Language Laboratory)

यद्यपि भाषाप्रयोगशाला आधुनिकसन्दर्भे बहूपयोगिनी मन्यते तथापि अस्याः प्रयोगे अधोलिखिताः सीमाः भवन्ति।[1]

१. भाषाप्रयोगशालाया उपयोगः पठनलेखनकौशलयोः न भवितुमर्हति।
२. एकस्मिन् काले १६ तः २० छात्राः अस्याः उपयोगं कर्तुं शक्नुवन्ति।
३. प्रयोगशालास्थापनाय पर्याप्तधनव्ययः भवति।
४. भाषाशिक्षणार्थम् अधिकः समयः अपेक्षितो भवति।
५. भाषा प्रयोगशालायां प्रशिक्षिताध्यापकानाम् अभावः दृश्यते।
६. अन्यविषयाणामध्ययने इयं नोपकरोति।

निष्कर्षः (Conclusion)

भाषाप्रयोगशाला केवलं श्रव्यप्रकारत्वेन दृश्यश्रव्यप्रकारत्वेन वा भवितुमर्हति। श्रव्यभाषाप्रयोगशालायां ध्वनिमुद्रणयन्त्र, वर्तुलपञ्चिका (Gramophone) भाषापञ्चिका (Language Tape), सान्द्रमुद्रिका (CD) इत्यादियन्त्राणि भवन्ति। दृश्यश्रव्य-प्रयोगशालायां सर्वैः श्रव्योपकरणैः सह चित्रप्रकाशकः (Projector), चित्रपत्रम् (Film Slide), चित्रपट्टिका (Film Strip) इत्यादिसाधनानि अपि भवन्ति। दृश्यश्रव्य-प्रयोगशालायां समस्त श्रव्योपकरणैः सह चित्रप्रकाशकः, चित्रपत्रं, चित्रपट्टिका इत्यादीनि उपकरणानि भवन्ति। श्रव्यप्रयोगशाला श्रवणकौशस्य, दृश्यश्रव्यप्रयोगशाला मौखिकाभ्यासस्य महत्त्वं प्रयच्छति। संस्कृतभाषाशिक्षणे विभिन्नध्वनीनाम् उच्चारणस्य स्थानं, संस्कृतसम्भाषणं, शुद्धोच्चारणं, श्लोकपठनं, प्रार्थना, नाटकानां संवादः, आदर्शवाचनम्, इत्यादीनाम् अभ्यासार्थं भाषाप्रयोगशाला अत्यन्तम् उपयोगिनी भवति। एषा व्यवस्था यद्यपि अधिकमूल्ययुक्ता एव, तथापि सामूहिकभाषाशिक्षणार्थम् उपचारात्मकशिक्षणार्थं च विशेषमहत्त्वं धत्ते। साम्प्रतं बहूनां छात्राणां कृते भाषाप्रयोगशालायाः आवश्यकता अनुभूयते। इयं भाषाप्रयोगशाला खलु भाषासञ्चारिकास्ति। भाषाप्रयोगशालायाः प्रयोजनानि मनसि निधाय यदि उपयुज्यते. तर्हि अधिगन्तॄणां श्रवणसम्भाषणकौशलयोः विकासः अवश्यं सम्भवति। यद्यपि अस्य उपयोगः विदेशीयभाषाभ्यासार्थं, द्वितीयभाषाभ्यासार्थं

१. डॉ. मयाशङ्कर सिंह, अध्ययन प्रकाशन, दिल्ली, 2008, पृ-258

च उपयुज्यते, तथापि प्रथमाभाषाभ्यासार्थमपि भाषप्रयोगशालामुपयोक्तुं शक्नुमः नास्ति अत्र सन्देहस्य लेशः।

**सन्दर्भग्रन्थसूची-**

१. Oxford Advanced Learner's Dictionary of Current English, Eighth Edition, Oxford University Press.२०१२

२. वृन्दावनपात्रः, कक्षासम्प्रेषणम्, तीरतरङ्गप्रकाशनम्, भुबनेश्वरम्, २००८।

३. रमाकान्तमिश्रः, शैक्षिकप्रविधिः, चौखम्बाप्रकाशनम्,वाराणसी, २०१९।

४. R. Yogendra Fundamental Aspects of Educational Technology, Shipraprakasana, Newdelhi, २०११, Page no-३२

५. R.A.Sharma, शिक्षा के तकनीकी के आधार, आर् लाल बुक् डिपो, मेरठ, २०१११, पृ-११९

६. S-C- Oberoi, शैक्षिकतकनीक, आर्य बुक डिपो, करोलबाग, नई दिल्ली, २००८, पृ-५५५

७. डॉ. मयाशङ्कर सिंह, अध्ययन प्रकाशन, दिल्ली, २००८, पृ-२५८

*****

# विशेष नोट

1. शोध-लेख मौलिक हो। प्रतिकृति (नकल) के लिए लेखक स्वयं उत्तरदायी होंगे।
2. लेख Unicode/ Arial Unicode MS/Walkman Chanakya 905, Font size 14 में न्यूनतम **5** पृष्ठ टंकित हो।
3. लेख में टंकित शब्दों की संख्या 1500-3000 तक हो।
4. सन्दर्भों में साङ्केतिक शब्दों का प्रयोग न करें। प्रामाणिक ग्रन्थ ही सन्दर्भ में अपेक्षित हैं। सन्दर्भ ग्रन्थ प्रकाशन सहित लिखें।
5. शोध-पत्र में शोध-प्रविधि की अनुरुपता हो।
6. शोध-पत्र पर दूरभाष संख्या एवं पूरा पता अवश्य अंकित करें।
7. शोध-लेख के लिये मानदेय नहीं दिया जाएगा।
8. शोध-लेख का प्रकाशन निर्णायक समिति की संस्तुति पर निर्भर होगा।
9. 'हरिप्रभा' शोध-पत्रिका की सदस्यता अवश्य करवाएँ।
10. पत्रिका का वार्षिक शुल्क 300/- रु. तथा दसवर्षीय शुल्क 2500/- रु. है।

*****

---

प्रकाशक, मुद्रक, निदेशक, डॉ. चित्तरञ्जनदयाल सिंह कौशल द्वारा हरियाणा साहित्य एवं संस्कृति अकादमी (संस्कृत प्रकोष्ठ), अकादमी भवन, आई.पी.-१६, सैक्टर-१४, पञ्चकूला के लिए प्रकाशित एवं एसोसिएट प्रिंटर्स, २२६ इंडस्ट्रियल एरिया, फेज़-१, चण्डीगढ़ से मुद्रित।